ग्रं. ९०

# VEERASIMHAVALOKA.

PUBLISHED

BY

GANGAVISHNU SHRIKRISHNADAS.

AT

SHRI - VENKATESHWAR PRESS

MUMBA-DEVI-BAZAAR, MHERWAN'S CHAL, No. 441.

BOMBAY.

1882.



अथ

# वीरसिंहावलोकः

अस्मिन्ग्रंथे

ज्योतिषशास्त्रकर्मविपाकायुर्वेदानुसारेण
रोगाणांनिदानपरिहारौ कथितौस्तः

अयंग्रंथः

मुंबय्यां

वैश्य श्रीकृष्णदासात्मजेन गंगाविष्णुना

स्वकीये

श्री वेंकटेश्वर यंत्रालये

मुद्रितः

संवत् १९३९

श्री

# अथवीरसिंहावलोकग्रंथस्थविषयानुक्रमः

| विषयाः | पत्रांक |
|---|---|
| मंगलाचरणम् | १ |
| ग्रंथकारप्रतिज्ञा | १ |
| रोगनामानि | १ |
| ज्योतिश्शास्त्राभिप्रायेणज्वरोत्पत्तिप्रकारः नचिरासार्थंदानानिशांतयश्च | २ |
| कर्मविपाकाभिप्रायेणज्वरस्यहेतुः शांतयश्च | ३ |
| वैद्यशास्त्रप्रतिपादितंज्वरस्यसनिदानं चिकित्सितं | ५ |
| ज्वरनिदानवचनानि | ११ |
| ज्वरातिसारस्यसनिदानंचिकित्सितम् | १६ |
| विषमोल्बणादिज्वरनिदानम् | १८ |
| वेलाज्वरादिज्वरापहंमांजिष्ठघृतम् | १९ |
| ज्वरापहारकंलाक्षादितैलम् | २० |
| अतिसारस्यज्योतिःशास्त्राभिप्रायेणहेतुस्तत्परिहारश्च | २० |
| अतिसारेकर्मविपाकः शांतिश्च | २१ |
| अतिसारेसनिदानंचिकित्सितम् | २२ |
| ग्रहणीरोगस्यज्योतिःशास्त्रेहेतुस्तत्परिहारश्च | २४ |
| ग्रहण्याः कर्मविपाकः शांतिश्च | २५ |
| ग्रहण्याःसनिदानंचिकित्सितम् | २६ |
| अर्शोरोगस्यज्यो० कारणंशांतयश्च | २७ |
| अर्शोरोगस्यकर्मविपाकस्तत्प्रतीकारश्च | २८ |
| अर्शोरोगस्यसनिदानंचिकित्सितम् | २९ |
| अजीर्णमंदाग्न्योर्ज्योतिः शास्त्रेकारणंतच्छांतिश्च | ३३ |

| विषयः | पत्रांक. |
| --- | --- |
| अजीर्णमंदाग्न्योः कर्मविपाकस्तच्छांतयश्च | ३३ |
| अजीर्णरोगस्य सनिदानंचिकित्सितम् | ३५ |
| कृमिरोगस्यज्यो० कारणंतत्प्रतीकारश्च | ३८ |
| कृमिरोगस्य कर्मविपाकस्तत्प्रतीकारश्च | ३८ |
| कृमिरोगस्यसनिदानंचिकित्सितम् | ३८ |
| पांडुरोगस्यज्यो० हेतुस्तच्छांतयश्च | ४० |
| पांडुरोगस्य कर्मविपाकस्तदुपशमश्च | ४० |
| कामलारोगस्य ज्योतिःशास्त्रे हेतुस्तदुपशमश्च | ४२ |
| कामलारोगस्य कर्मविपाकस्तत्प्रतीकारश्च | ४२ |
| कामला पांडु हलीमकादिरोगाणांसनिदानंचिकित्सितम् | ४३ |
| रक्तपित्तस्यज्योतिःशास्त्रेहेतुस्तदुपशमश्च | ४५ |
| रक्तपित्तस्य कर्मविपाकः | ४६ |
| रक्तपित्तस्यसनिदानंचिकित्सितम् | ४६ |
| क्षयरोगस्यज्यो० कारणादिकम् | ४९ |
| क्षये कर्मविपाकस्तदुपशमश्च | ५० |
| सर्वव्याधिमिति रूपदानं | ५२ |
| उरः क्षतस्य क्षयरोगस्यच सनिदानंचिकित्सितम् | ५२ |
| कास कफ श्वास हिक्कानां ज्योति० हेतवस्तत्परिहारश्च | ६१ |
| कास कफ श्वासानां कर्मविपाकस्तच्छांतिश्च | ६१ |
| गद्गदत्वे कर्मविपाकः तत्प्रतीकारश्च | ६३ |
| कासस्यसनिदानंचिकित्सितम् | ६४ |
| हिक्कारोगस्य कर्मविपाकस्तत्प्रतीकारश्च | ६६ |
| हिक्कारोगस्यचिकित्सितम् | ६७ |
| श्वासरोगस्यसनिदानंचिकित्सितम् | ६८ |
| स्वरभेदस्यसनिदानंचिकित्सितम् | ७० |
| अरोचकस्यज्यो० कारणंतत्प्रतीकारश्च | ७१ |
| अरोचकस्य कर्मविपाकस्तदुपशमश्च | ७१ |

| विषयः | पत्रांक. |
|---|---|

इतिवीरसिंहावलोकग्रंथस्थ
विषयानुक्रमःसमाप्तः

श्रीगणेशायनमः अथवीरसिंहावलोकःप्रार भ्यते॥ ॥यच्चक्षुर्भुवनस्यदिव्यममलंधामश्रुतीनांपरंयद्दुःखैकनिकृंतनंचपयसांबीजंयदेकंमतं सन्नेषग्निहुतस्यवेदविदितंस्थानंचयत्सर्वदानृ ह्णःपातुसनातनंहरिमहस्तत्त्वप्रबोधोदयं १ दैवज्ञागमधर्मशास्त्रनिगमायुर्वेददुग्धोदधीनाम थ्यस्फुरदात्मबुद्धिगिरिणाविश्वोपकारोज्ज्वलं आलोकामृतमातनोतिविबुधैरासेव्यमत्यद्भुतं श्रीमत्तोमरदेववर्म्मतनयःश्रीवीरसिंहोनृपः २ इहखलुपुरुषार्थचतुष्टयायधीमतांप्रवृत्तिः तत्राद्योधर्मः-सचशरीरमंतरेणनसंभवति तच्चरोगरहितंधर्मकर्मक्षमंभवति तत्स्वरूपनिरूपणायतद्दोषप्रतीकाराय चरोगाःपरिगण्यंते तेचपूर्वाचार्योक्ताः ज्वरोतिसारो ग्रहणीचार्शोजीर्णविसूचिका सालसाचविलंबीचकृमिरुक्पांडुकामलाः ३ हलीमकंरक्तपित्तंराजयक्ष्मा उरःक्षतं कासोहिक्कातथाश्वासःस्वरभेदस्त्वरोचकः ४ छर्दिस्तृष्णाचमूर्छाचरोगाःपानात्ययादयः दाहस्त्वथस्त्वपरोन्मादोपस्मारोसेथानिलामयः ५ वातरक्तमुरुस्तंभश्चामवातोथशूलरुक् पंक्तिजंशूलमानाहमुदावर्त्तोथगुल्मरुक् हृद्रोगोमूत्रकृच्छ्रंचमूत्राघातस्तथाश्मरी प्रमेहोमधुमेहश्चपिडिकाश्चप्रमेहजाः मेदोदोषोदरशोथोवृद्धिश्चगलगंडकः गंडमालापची

ग्रंथीरर्बुदंश्लीपदंतथा विद्रधिर्व्रणशोथश्चद्वौव्रणौ
भग्ननाडिको भगंदरोपदंशौचशूकदोषस्त्वगामयः
शीतपित्तमुदर्दश्चकोढश्चैवाम्लपित्तकं विसर्प्पाश्च
सविस्फोटाःसरोमंत्योमसूरिकाः क्षुद्रास्यकर्णनाशा-
क्षिशिरस्त्रीबालकामयः विषंचेत्ययमुद्देशःसंग्रहे-
स्मिन्प्रकीर्त्तितः अथक्रमप्राप्तस्यज्वरस्यज्योतिः
शास्त्राभिप्रायेणोत्पत्तिप्रकारमाह यथोक्तंजातके
नीचस्थितस्यभानोर्दशाक्षिनाशंज्वरंशिरोरोगं बंध
नमत्यधरुजःकुष्टस्यचदर्शनंचिन्हं जनयतीतिशे
षः क्षीणेंदुदशायामप्येवं अन्यच्चसारावल्यां सु
त्हद्बंधुसमायोगोभूनिमित्तेकलिर्भवेत् देहपीडा
ज्वरोव्याधिःशिखिमध्यगतेबुधे शनेरंतर्गतनमप्या
प्येवं तत्तद्ग्रहवैकृतनिराकृतयेजपहोमादिकंकुर्यात्
यथाहहारीतः जन्मांतरकृतंपापंव्याधिरूपेणबाध
ते तच्छांतिरौषधैर्दानैर्जपहोमसुरार्च्चनैरिति तत्र-
नीचगेरवौतद्बाधोपशांतये आकृष्णेनेतिजपःश्वा
र्कीभिःसमिद्भिर्जुहुयात् धेनुंदद्यात् मनःशिलेला
सुरदारुकुंकुमैरुशीरयष्टीमधुपद्मकान्वितैः सता
म्रपुष्पैर्विषमास्थितेरवौशुभावहंस्नानमुदात्हतंबुधैः
१ विद्रुमंचधार्यंक्षीणेंदुदशाजनितबाधोपशांतये
यथा इमंदेवेतिजपः पालाशाभिःसमिद्भिर्जुहुयात्

शंखंदद्यात् पंचगव्यगजदानविमिश्रैः शंखमुक्तिकुमुदस्फटिकैश्च शीतरश्मिकृतवैकृतहंतिस्नानमेतदुदितंनृपतीनां रौप्यंमुक्ताफलंवधार्यं केतुदशांतर्गतबुधजनितदुरितक्षयाय उद्बुध्यस्वेतिमंत्रजपः अपामार्गसमिद्भिर्जुहुयात् हेमंदद्यात् गोमयाक्षतफलैः सरोचनैः क्षौद्रशर्करिभवमूलहेमभिः स्नानमुक्तमिदमत्रभूभृतांबाधनाशफभविनाशनंबुधैः हेमंधार्यं शनैश्वरांतर्गतराहुजनितदुरितोपशमाय कयानश्चित्र-इतिमंत्रेनजपः दूर्वासमिद्भिर्होमः आयसंचदद्यात् असिततिलांजनलोध्रवलाभिः शतकुसुमाघनलाजयुताभिः रवितनयेकथितंविषमस्थेदुरितहृदाप्लवनंमुनिमुख्यैः राजावर्त्तपरिधानंच अथकर्मविपाकाभिप्रायेणज्वरस्यहेतुमाह तत्प्रतीकारंच यथाहगार्गः येपुनःपुर्वजन्मनिक्रूराःपिशुनचेतसस्तेन्यजन्मनिसंततज्वरवंतःस्युः तच्छमनार्थंजातवेदसमष्टोत्तरशतयुतंकल्पं सहस्रकलशाभिषेकंमहादेवस्यकुर्यात् ब्राह्मणभोजनंचकारयेत् अन्यच्चयेपुनःक्रूरकर्माणःपापाःपिशुनचेतसः तेभवेयुःसदाशीतज्वरवंतश्चनरस्वराः शांतयेऽयुतसंख्याकंकुर्यात् प्रयतोजपं जातवेदसमंत्रेणब्राह्मणान्भोजयेत्ततः सुरामांसोपहाराद्यैः कल्पंतत्रप्रशस्यते सहस्रकलशस्ना

नशतभोजनमेवचेति तत्रब्राह्मणभोजनंगुरुलघु
भावेनद्रष्टव्यंअशक्त्यापेक्षयावा वित्तशाठ्यंनकुर्वी
तेतिवचनात् इतिसंततज्वरं सन्निपातज्वरमनु-
क्त्वासंततज्वरप्रतीकारस्ययत्कथनंचतदार्षवचनानु
रोधात् शुभकार्यसंततसंकोचनः उष्णज्वरवान्भवति
महादेवस्यसहस्रकलशाभिषेकमाचरेत् शक्त्याब्राह्म
णभोजनं तथाचोक्तंमहेश्वरतंत्रे उष्णज्वरेमहेशस्य
प्रकुर्यादभिषेचनमिति शीतज्वरेविष्णोःसर्वमेतत्का
र्यं शीतज्वरेतथाकुर्यादभिषेकंहरेर्बुधइतिवचनात्
अंगदाहीज्वरवानिति नवकुंभंसमानीयमृण्मयंचा
व्रणंदृढं लोहितंकर्णरहितंस्थापयेत्तंडुलोपरि तंडुला
नांपरिमाणंद्रोणपंचकमिष्यते विशुद्धविभवद्ग्रात्यं
श्वेतवस्त्रेणवेष्टयेत् मधुनाप्यथवाज्येनगुडशर्करया
पिवा तिलैःप्रपूरयेदद्भिर्यथाविभवतोनरः श्वेतपुष्पैर
र्चयेत्तंगंधधूपैस्तथापरैः होमश्चपूर्ववत्कार्यःसमिदा-
ज्यचरूत्करैः सुवर्णंचयथाशक्त्याब्राह्मणायनिवे-
दयेत् तस्मैव्रतवतेवृत्तश्रुतशीलायसत्कृतं मंत्रेणाने
नविधिवत्पूजयित्वाज्वरीनरः महेशदेवदेवेशदेवदेव
परात्पर कुंभेनानेनदत्तेनज्वरःक्षिप्रंविनश्यतु एकांतं
संनिपातंचतृतीयंचचतुर्थकं पाक्षिकंमासिकंवापिसं
वत्सरिकमेवच नाशयेतांममक्षिप्रंवासुदेवमहेश्वरौ

अजीर्णप्रायश्चित्तेनदानाद्यधिकारीत्याशंक्याह अ
त्रोक्तमेवजपहोमादिकंप्रायश्चित्तंवेदितव्यं इतिस
र्वज्वरहरः कुंभदानविधिः कर्मविपाकोक्तंज्वरप्रती
कारमुक्ताभिषकूशास्त्रप्रतिपादितंसनिदानंज्वरचि
कित्सितमाह रोगमादौपरीक्षेततततोनंतरमौषधं॥ ततः
कर्मभिषकूपश्चाज्ज्ञानपूर्वंसमाचरेत् तथाचसुश्रुता
चार्यः यस्तुरोगविशेषज्ञःकर्मभैषज्यकोविदः देश-
कालप्रमाणज्ञस्तस्यसिद्धिरसंशयः आदावंतोरुजां-
ज्ञानेप्रयतेत चिकित्सकः साध्यासाध्यविभावज्ञः
ततःकुर्याच्चिकित्सितं नास्तिरोगोविनादोषैःयस्मात्त
स्माद्विचक्षणः अनुक्तमपिदोषाणांलिंगैर्व्याधिमुपा
चरेत् विकारनामाकुशलोनैवन्हीयात्कदाचन नहि
सर्वविकाराणांनामतोस्तिध्रुवास्थितिः दर्शनस्पर्शन
प्रश्नैर्व्याधेर्ज्ञानंत्रिधामतं आयुरादिदृशास्पर्शाच्छी
तादिप्रश्नतोपरं कृछ्रोपायःसुखोपायस्त्रिविधःसाध्य
उच्यते असाध्योद्विविधोज्ञेयोयाप्योयश्चाप्रतिक्रियः
याप्याःकृच्छ्रकृत्स्येवसाध्यायाप्याउपेक्षिताः स्वभा
वाद्व्याधयोसाध्याःकेचित्केचिदु पेक्षिताः साध्या
याप्यत्वमायांतियाप्याश्चासाध्यतांतथा घ्नंतिप्राणा
नसाध्याश्चनराणामक्रियावतां जातमात्रचिकित्स्य
स्तुनोपेक्ष्योल्पतयागदः वन्हिशत्रुविषैस्तुल्यःस्वल्पो

पिविकरोत्यसौ निवृत्तोपिपुनर्व्याधिस्वल्पेनायाति-
हेतुना दोषैर्मार्गीकृतेदेहेखेषुसूक्ष्मइवानलः व्याधे-
स्तत्वपरिज्ञानंवेदनायाश्चनिग्रहः एतद्वैद्यस्यवैद्यत्वं
नवैद्यःप्रभुरायुषः याभिःक्रियाभिर्जायंतेशरीरेधातवः
समाः साचिकित्साविकाराणांकर्मतद्भिषजांमतं उत्प
द्यतेहिसावस्थादेशकालबलंप्रति यस्यांकार्यमकार्यं-
स्यात्कर्मकार्यंविवर्जितं यथाहुतीसदाचार्यः यद्रूपयः
शिखिसमीरवियद्भिरेभिर्भूतैर्गुणैरपिचसत्वरजस्त
मोभिः त्वग्दोषधातुमलमर्मशिरादिभिश्चव्याप्तंवपु
स्तनुभृतामिदमत्ररोगाः वैवातपित्तकफजास्त्रिवि
धाहृदाश्चकायेमनस्यपिचसंत्यपरेनराणां साध्या-
श्चतेक्वचिदपिप्रभवंतियाप्याः केचित्क्वचित्पुनरसा-
ध्यतमाःप्रदिष्टाः एकैकदोषजनितानिरुपद्रवाश्च-
दीप्तानलस्यचसदात्मवतश्चजंतोः वित्तान्वितस्यच
रुजःसदुपक्रमेणसाध्याभवंतिभिषजामचिरोद्गता-
श्च येयावदेवभिषजायगदप्रयोगास्तावत्प्रशांतिमुप
यांत्यगदैर्विनाये प्रादुर्भवंतिचपुनःसहसाहिदोषास्ता
दृग्विधास्स्युरितियाप्यतमागदास्ते येकर्मजाःसहभ
वंतिशरीरिणांयेयेचत्रिदोषजनिताश्चिरकालजाये
सोपद्रवाश्चमुतधनस्यचतेगताग्नेरुद्राागदागदवता
मगदैर्नगम्याः कर्मप्रकोपेणकदाचिदेकेदोषप्रको-

पेणभवंतिचान्ये तथापरेप्राणिषुकर्मदोषप्रकोप
जाःकायमनोविकाराः गृहणीजठरगुदजोन्मादाप-
स्मृत्यसृगुस्तुतिपंगुताश्रुतिविकलतावाग्वैकल्यप्र
मेहभगंदराः प्रदरपवनव्याधिश्वित्रक्षयक्षणदांधता
तिमिरवदनघ्राणार्शोसिस्वयथुविपचीव्रणा वल्मीक
कुणकशंखपुंडरीकरक्तार्बुदव्रणविसर्प्पवपुप्रकंपाः
पक्षाभिघातगलगंडगलग्रहाश्वदंडापतानकसमीर
णशोणिताद्याः दंतामयाःस्युरपरद्रविणापहारगुर्व-
गनागमनविप्रवधादिभिर्ये दुःकर्मभिस्तनुभृतामि
हकर्मजास्तेनोपक्रमेणभिषजामुपयांतिसिद्धिं दानै
र्दयाभिरपिचद्विजदेवतागो गुर्वर्चनप्रणतिभिश्चज
पैस्तपोभिः इत्युक्तपुण्यनिचयैरपचीयमानाःप्राकू
पापजायदिरुजःप्रशमंप्रयांति स्वहेतुदुष्टैरनिला-
दिदोषैरुपस्तुतैःखेषुपरिस्खलद्भिः भवंतियेप्राणभृ
तांविकारास्तेदोषजाभेषजसिद्धिसाध्याः दानादि-
भिःकर्मभिरोषधीभिः कर्मक्षयेदोषपरिक्षयेच सिध्यं
तियेयत्नवतांकथंचित्तेकर्मदोषप्रभवाविकाराः दोषा
प्रदेशवलकालविकारसत्वसात्म्यौषधानलवयःप्र
कृतीःपरीक्ष्य नानाप्रकारपवनादिगदातुराणामुक्तं
चिकित्सितमिदंतनुकर्मजानां वातादयःपूर्वमुदाहृ
तायेदोषाशरीरेषुशरीरिणांहि वातस्त्वधस्ताद्वपुष-

श्चमध्येपित्तंकफश्चोर्द्धमितिस्थितास्ते रसश्चरक्तं
पिशितंचमेदस्त्वस्थीनिमज्जाचथशुक्रमेते स्युर्धा
तवः सप्तमलास्तथैवविण्मूत्रमुख्यामुनिभिःप्रदिष्टाः
दोषेषुधातुषुमलेषुसमेषुसत्सुसात्म्यभवेदिहनृणा
मसमेष्वसात्म्यं यस्मादतःसमतयाप्रयतेननेषामेत
च्चिकित्सितरहस्यमुदाहरंति नाभेरधःप्रसृतयोदश
यांस्वधस्तादूर्ध्वंगताःप्रसृतयोदशतद्वदेव द्वेद्वेशिरे
प्रवितते प्रसृतेचतिर्यग्युक्ताचतुर्भिरितिविंशतिरत्र-
काये द्वादशाभिर्द्विगुणाभिरमूभिर्व्याप्तमिदंनृशरी
रमशेषं आभिरमीकफपित्तसमीराः स्वैर्वपुषिप्रस
रंतिशिराभिः आसांचसूक्ष्मसुषिराणिशतानिस
प्तयुक्तानितैरसकृदन्नरसंवहद्भिः आप्यायतेव-
पुरिदंहिनृणाममीषामंभस्त्रवद्भिरिवसिंधुशतैःसं
मुद्रः आपादतःप्रभृतिगात्रमशेषमेषामामस्तका-
दपिचनाभिभुवस्तनन एतन्मृदंगइवचर्मचयेन-
नद्धंसम्यक्नृणामितिशिराशतसप्तकेन तेनानुग
म्यचपुरैतदनेनदोषाःकुर्वंतिकायकुपिताःपवनाद-
योमी रोगानशेषवपुषिस्थवाद्धकायेशारवासुचा
केविदथावपर्वांतरेषु भूतानिकर्माणिचदोषधातु-
मलास्तथासप्तशिराशतानि प्रोक्तानिकर्माणिचत्व
हृदंचनाभिस्त्वितित्रीण्यपरैःकिमुक्तैः गुणत्रयंसः

त्वग्जस्त्तमांसि हृदिस्थितान्यत्रमनोविकाराः नाभि प्रदेशाच्चशिराःप्रवृत्तागुदेप्रधानांत्रममूत्रवद्धं अतः प्रधानाविभवंत्यमूनित्वन्नाभिप्रासानिनृणाममीषां एतन्मयंप्रोक्तमिदंशरीरमितिप्रकाशीकृतमल्पमात्रं वातस्यपित्तस्यकफस्यवापिविकारिणांकायवतां हिकाये प्रकोपहेतुःकुपितस्यलिंगंचिकित्सितंचेतिनि रूपणीयं रूक्षैस्तिक्तैःकषायैःकटुभिरनशनैर्वेगसंधार णैश्चव्यायामैश्चव्यवायैःप्रतरणबलवद्विग्रहैर्जागरै- श्च श्यामानीवारकंगुप्रभृतिभिरशनैरुल्लसद्भिःपयोदै रन्तेजीर्णेचजंतोरभिभवतितनौमारुतस्यप्रकोपः कट्व म्लोष्णाविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसंपर्क तिलातसीदधिसुराशुक्तारनालादिभिः भुक्तेजीर्यति- भोजनेचशरद्ग्रीष्मेसतिप्राणिनां मध्यान्हेचतथार्द्धरा त्रिसमयेपित्तप्रकोपोभवेत्॥गुरुमधुरातिशीतदधि- दुग्धनवान्नपायसस्तिलविकृतीक्षुभक्ष्यलवणातिदि वाशयनैः समविषमाशनाध्यसनपायसपिष्टकृतैरपि चकफःप्रकुप्यतिमधौदिवादिषुच इतिप्रकोपकारणैः प्रकोपमेत्यसर्वगाः समीरणादयस्तनौरुजःसृजंतिजं तुषुश्चवातपित्तकफकोपकारणंसूचितंयदिहसूत्रसंग्र- हे प्रोच्यतेतदिहसांप्रतंमयारुग्परीक्षणमनेनकारये त्॥हृशिशिरासिचशंखेश्रोत्रनेत्रांतरेषुभुविहृदिहनुम

न्यास्कंधमूर्द्धाईसंधौ रुगतिनिशिदिवाल्पास्यादक-
स्मात्प्रशांताभवतिहिभुजजंघास्तब्धसंकोचताच कटि
विटपयकृत्सुक्लोम्निचप्लीन्हिपृष्ठे जठरवृषणवक्षःकु
क्षिकक्षांतरेषु प्रसरतिगुरुशूलंनाभिवस्तिस्तनेषुत्वक्
वांलेगुदगुल्योपांतपक्षद्वयेषु वदनविरसतास्याद्रूक्षसः
कर्कसत्वंभवतिवपुषिकार्श्यंरात्रिनिद्रानिवृत्तिः त्वचिच
परुषतास्यात्स्यात्त्ववैषम्यमग्नेरितिपवनविकारेलक्षणं
प्रोक्तमेतत्॥भ्रममदसुखशोषस्वेदसंतापमूर्छामुखन
यननखत्वग्मूत्रविट्पीततावप्रलपनमतिसारश्चारुचि
श्चज्वरश्चतृड्तिशिशिरतेछापित्तरोगस्यलिंगं अंगस्य
गौरवमपाटवमंतरंगरुक्कृशताचहृदयस्यमुखप्रसेकाः
आलस्यमास्यमधुरत्वमकांडकंडूरापीततानयनयोर
तिरोमहर्षः प्रज्ञाल्पुतिर्वमथुपीनसकासनिद्रातंद्रादय
श्चुलुचुलायनमुल्बणंच स्यादोष्टकंठरसनारदमूलता
लुघ्राणेक्षणश्रवणसष्कुलिकांतरेषु श्लेष्माद्रवेभवति
लिंगमिदंविकारेसंसर्गजेषुचगदेषुभवेद्विदोषं जंतोरिदं
पवनपित्तकफप्रकोपेलिंगंत्रिदोषजरुजिप्रविभज्ययो-
ज्यं तत्रतावदनिरूससममेतिस्नेहवस्तिपरिषेकनिरूहैः
भुक्तमात्रवलदेननराणामोदनेनमृदुमांसरसेन द्राक्ष
यात्रिफलयातृ,वृताचस्त्रंसनेनरुधिरस्रुतिभिश्च स
र्पिषाचपयसासितयाचस्वादुनाभवतिपित्तनिवृत्तिः ढं

घनेनवमनेनयवान्नप्राशनेनशिरसश्चविरेकैः कव्युला
दिकवलैरहिमाभिश्चाद्भिरत्रशममेतिकफश्च॥ ॥
अथरुग्विनिश्चयात्ग्रंथवाहुल्यभयात्संक्षिप्यकियंत्स-
पिज्वरनिदानवचनानिलिख्यंते॥ ॥दक्षापमानसंक्रु
द्धरुद्रनिश्वाससंभवः ज्वरोष्टधापृथक्द्वंद्वसंघातागं
तुजःस्मृतः मिथ्याहारविहाराभ्यांदोषात्ह्यामाशया
श्रयाः वहिर्निरस्यकोष्टाग्निंज्वरदास्युर्रसानुगाः स्वे
दावरोधःसंतापःसर्वांगग्रहणंतथा युगपद्यत्ररोगेषु
सज्वरोव्यपदिश्यते रुग्णद्धिचाप्यपांधातून्यस्मात्तस्मा
ज्ज्वरातुरः भवत्यत्युष्णगात्रश्चास्विद्यतेनचसर्वशः
श्रमोरतिर्विवर्णत्वंवैरस्यंनयनप्लवः इच्छाद्वेषोमुहुश्चा
पिशीतवातातपादिषु जृंभांगमर्दोगुरुतारोमहर्षोरु
चिस्तमः अग्रहर्षश्चशीतंचभवंत्युत्सत्स्यतिज्वरे सा-
मान्यतोविशेषातुजृंभात्यर्थंसमीरणात् पित्तान्नय
नयोर्दाहःकफादन्नारुचिस्तथा सर्वलिंगसमावायः
सर्वदोषप्रकोपजे रूपैरन्यतराभ्यांतुसंसृष्टैर्द्वंद्वजंवि
दुः वेपथुर्विषमोवेगःकंठोष्टमुखशोषणं निद्रानाशः
क्षवस्तंभोगात्राणांरौक्ष्यमेवच शिरोहृद्गात्ररुग्व
क्त्रवैरस्यंगाढविट्कता शूलाध्मानेजृंभनंचभवंत्यनिल
जेज्वरे वेगस्तीक्ष्णोतिसारश्चनिद्राल्पत्वंवमिस्त-
था कंठोष्टमुखनासानांपाकःस्वेदश्चजायते प्रला

पोवक्कककटुतामूर्छादाहोमदस्तृषा पीतविण्मूत्रनेत्र
त्वंपैत्तिकेभ्रमएवच स्तैमित्यंस्तिमितोवेगश्चालस्यंम
धुरास्यता शुक्लमूत्रपुरीषत्वंस्तंभस्तृप्तिरथापिच गौ
रवंशीतमुत्क्लेदोरोमहर्षोतिनिद्रता श्रोतोरोधोरुगल्प
त्वंप्रसेकोवहुमूत्रता नात्युष्णगात्रताछर्दिर्लालास्रावो
ऽविपाकता प्रतिश्यायोरुचिःकासःकफजेक्ष्णोश्च-
शुल्कता तृष्णामूर्छाभ्रमोदाहःस्वप्ननाशःशिरोरुजः
कंठास्यशोषोवमथूरोमहर्षोरुचिस्तमः पर्वभेदश्चजृंभा
चवातपित्तज्वराकृतिः स्तैमित्यंपर्वणांभेदोनिद्रागौर
वमेवच शिरोग्रहःप्रतिश्यायःकासःस्वेदाप्रवर्त्तनं सं-
तापोमध्यवेगश्चवातश्लेष्मज्वराकृतिः लिप्ततिक्ता-
स्यतातंद्रामोहःकासोरुचिस्तृषा॥मुहुर्दाहोमुहुःशैत्यंश्ले
ष्मपित्तज्वराकृतिःक्षणेदाहःक्षणेशीतमस्थिसंधिशिरो
रुजः सस्रावेकलुषेरक्तेनिर्भुग्नेचापिलोचने सस्वनौस
रुजौकर्णौकंठःशूकैरिवावृतः तंद्रामोहःप्रलापश्चकास-
श्वासोरुचिर्भ्रमः तद्वच्छीतंमहानिद्रादिवाजागरणंनिशि
सदावानैववानिद्रामहास्वेदातिनैववा गीतनर्त्तनहा-
स्यादिविकृतेहाप्रवर्त्तनं परिदग्धाखरस्पर्शाजिव्हास्र
स्तांगतापरं ष्ठीवनंरक्तपित्तस्यकफेनोन्मिश्रितस्यच
शिरसोलुंठनंतृष्णानिद्रानाशोहृदिव्यथा स्वेदमूत्रपुरी
षाणांचिराद्दर्शनमल्पशः कृशत्वंनातिगात्राणांसततंकं

ठकूजनं कोठानांश्याव रक्तानांमंडलानांच्वदर्शनं मूक
त्वंश्रोतसांपाकोगुरुत्वमुदरस्यच चिरात्पाकश्वदोषा-
णांसंनिपातज्वराकृतिः दोषेप्रवृद्धेनष्टेग्नौसर्वसंपूर्ण
लक्षणः सन्निपातज्वरोऽसाध्यःकृछ्रसाध्यस्ततोन्य-
था सप्तमेदिवसेप्राप्तेदशमेद्वादशेपिवा पुनर्घोरतरोभू
त्वाप्रशमंयातिहंतिवा पित्तकफानिलवृद्ध्यादशदिव-
सद्वादशाहसप्ताहात् हंतिविमुंचतिपुरुषंत्रिदोषजोधा
तुमलपाकात् सप्तमीद्विगुणायावन्नवम्येकादशीत-
था एषात्रिदोषमर्यादामोक्षायचवधायच सन्निपात
ज्वरस्यांतेकर्णमूलेसुदारुणः शोथःसंजायतेतेनक-
श्चिदेवप्रमुच्यते ज्वरस्यपूर्वज्वरमध्यतोवाज्वरांततोवा
श्रुतिमूलशोथः क्रमादसाध्यःखलुकृछ्रसाध्यःसुखेन-
साध्योमुनिभिःप्रदिष्टः त्रयःप्रकुपितादोषाउरःस्रोतोनु
गामिनः आमानुबद्धाग्रथिताबुद्धींद्रियमनोगताः जनयंत्य
तिमहाघोरमभिन्यासज्वरंदृढं स्रस्तंनेत्रेप्रसुप्तिश्चनचे
ष्टांकांचिदीहते नचदृष्टिर्भवेत्तस्यसमर्थारूपदर्शनेन
घ्राणरसनास्पर्शान्शब्दान्वानैवबुध्यते शिरोलोठयते
भीक्ष्णमाहारंनाभिनंदति कूजतेतुद्यतेचैवपरिवर्तन
मीहते अल्पंप्रभाषतेकिंचिदभिन्यासःसउच्यते प्रत्या
ख्येयःसभूयिष्ठंकश्चिदेवात्रसिध्यति संधिगश्चांतकश्चै
वरुग्दाहश्चित्तविभ्रमः शीतांगस्तंद्रिकःप्रोक्तःकंठकुब्ज

श्चकर्णकः विख्यातोसुग्ननेत्रश्चरक्तष्ठीविप्रलापकः
ज्रंभकश्चेत्यभिन्यासःसन्निपातास्त्रयोदश इतिज्वर
कात् अभिघाताभिषंगाभ्यामभिचाराभिशापजः
आगंतुर्जायतेदोषैर्यथास्वंतंविभावयेत् श्यावास्यता
विषकृतेतथातीसारएवच भक्तारुचिःपिपासाचतोद
श्चसहमूर्छया चौषधीगंधजेमूर्छाशिरोरुग्वमथुस्तथा
कामजेचित्तविभ्रंशस्तंद्रालस्यमभोजनं हृदयेवेदना
चास्यगात्रंचपरिशुष्यति भयात्प्रलापःशोकाच्चभवेत्को
पाच्चवेपथुः अभिचाराभिशापाभ्यांमोहस्तृष्णाचजाय
ते भूताभिषंगादुद्वेगोहास्यंरोदनकंपने कामशोक
भयाद्वायुःक्रोधात्पित्तंत्रयोमलाः भूताभिषंगात्कुप्यं
तिभूतसामान्यलक्षणाः दोषोल्पोहितसंभूतोज्वरो-
त्सृष्टस्यवापुनः धातुमन्यतमंप्राप्यकरोतिविषमज्वरं
यःस्यादनियतात्कालाच्छीतोष्णाभ्यांतथैवच वेगतश्चा
पिविषमोसज्वरःविषमःस्मृतः संततोरसरक्तस्थःसततो
रक्तधातुगः भिषजासचविज्ञेयःसोन्येद्युःपिशिताश्रि
तः मेदोगतस्तृतीयेन्हित्वस्थिमज्जागतःपुनः कुर्या
च्चातुर्थकंघोरमंतकंरोगसंकरं सप्ताहंवादशाहंवाद्वाद
शाहमथापिवा संतत्यायोविसर्गीस्यात्संततःसनिग-
द्यते अहोरात्रेसततकोद्वौकालावनुवर्त्तते अन्येद्यु-
ष्कस्त्वहोरात्रमेककालंप्रवर्त्तते तृतीयकस्तृतीयेन्हिचतु

र्थेन्हिचतुर्थकः दिनद्वयमतिक्रम्यप्रत्येतिसचतुर्थकः
केचिद्भूताभिषंगोत्थंवदंतिविषमज्वरं अधिशेतेयथा-
भूमिंबीजंकालेप्ररोहति अधिशेतेतथाधातूनदोषःका
लेप्रकुप्यति सवृद्धिंवलकालंचप्राप्यदोषतृतीयकं च
तुर्थकंचकुरुतेप्रत्यनीकवलक्षयात् कफपित्तात्रिकग्रा
हीपृष्ठंवातकफात्मकः वातपित्ताच्छिरोग्राहीत्रिविधः
स्यात्तृतीयकः चातुर्थकोदर्शयतिप्रभावंद्विविधंज्वरः
जंघाभ्यांश्लैष्मिकःपूर्वंशिरसोनिलसंभवः विषमज्व
रएवान्यश्चातुर्थकविपर्ययः अस्थिमज्जागतोदोषो-
चातुर्थकविपर्ययः समध्येज्वरयत्यन्हीआद्यंतेचविमु
चति तत्रद्व्यहंज्वरयतिदिनमेकंतुमुंचति नित्यंमंदज्व
रोरूक्षःशूनःकृछ्रेनसिध्यति स्तब्धांगःश्लेष्मभूयिष्टो
भवेद्वातबलासकी प्रलिपन्निवगात्राणिघर्मेणगैरवेण
वा मंदज्वरोविलेपीचसशीतःस्यात्प्रलेपकः स्वासोमू
र्छारुचिःछर्दिस्तृष्णातीसारविद्ग्रहाः हिक्काकासांगभे-
दाश्चज्वरस्योपद्रवादश बलवत्स्वल्पदोषेषुज्वरःसा
ध्योनुपद्रवः हेतुभिर्बहुभिर्जातोबलवान्बहुलक्षणः
ज्वरःप्राणांतकृद्यश्चशीघ्रमिंद्रियनाशनः विसंज्ञस्ता-
म्यतेयस्तुशेतेनिपतितोपिवा शीतार्दितोंतरुष्णश्चज्व
रेणम्रियतेनरः देहोलघुर्व्यपगत क्लममोहतापःपाको
मुखेकरणसौष्टवमव्यथत्वं स्वेदक्षयःप्रकृतियोगिमनो

न्नलिप्सा कंडूश्चमूर्द्ध्निविगतज्वरलक्षणानि इतिज्वर
निदानाधिकारः अथज्वरातीसारस्यनिदानंचिकित्सि
तंचाह ज्वरातीसारयोरुक्तंनिदानंयत्पृथक्पृथक् तस्मा-
ज्ज्वरातिसारस्यतेननात्रोदितंपुनः लंघनमुभयोरुक्तं
मिलितंकार्यविशेषतस्तदनु उत्पलषट्कसिद्धंलाजामं
डादिकंसकलं पृष्टिपर्णीबलाबिल्वनागरोत्पलधान्यकैः
ज्वरातीसारयोःपेयंपिबेच्चाम्लभ्लितांनरः उत्पलषट्कः
नागरातिविषामुस्ताभूनिंबामृतवत्सकैः सर्वज्वरहरःक्वा
थःसर्वातीसारनाशनः नागरादिक्वाथः ज्वपर्प्पटकामृ
ताः जयत्याममतीसारंसत्वरंसमहोषधं ह्रीवेरातिविषा
मुस्ताबिल्वनागरधान्यकं पिबेद्धिश्राविबंधघ्नंशूलदोषा
मपाचनं सरक्तंहंत्यतीसारंसज्वरंवाथविज्वरं ह्रीवेरा
दिः॥पंचमूलीबलाबिल्वगुडूचीमुस्तनागरैः पाठाभूनिंब
ह्रीवेरकुटजत्वक्पलैःसृतं हंतिसर्वानतीसारान्ज्वरदो
षंवमिंतथा सशूलोपद्रवंश्वासंकासंहन्यात्सुदुस्तरं
पंचमूलीतुसामान्यायोज्यावातेकनीयसी पंचमूलीतु
महतीवातश्लेष्माधिकेहिता पंचमूल्यादिः किराताब्दा
मृतादिभ्वचंदनोदीच्यवत्सकैः शोथातीसारसमनंवि-
शेषाद्ज्वरनाशनं इतिज्वरातीसारचिकित्सा लंघनेन
क्षयंनीतेदोषेसंधुक्षितेनले विज्वरत्वंलघुत्वंचक्षुच्चैवा
स्योयजायते सद्योभुक्तस्यवाजातेज्वरेसामेविशेषतः

वमनंवमनार्हस्यशस्तमित्याहवाग्भटः भेषजंत्वामदोषे षुभूपोवर्द्धयतिज्वरं शोधनंशमनीयंचकरोतिविषमज्वरं विनापिभेषजैर्व्याधिःपथ्यादेवनिवर्त्तते नतुपथ्यविहीन स्यभेषजानांशतैरपि रक्तशाल्यादयःशस्ताःपुराणाःषष्टि कैःसह यवाग्वोदनलाजार्थेज्वरितानांज्वरापहं कफवात ज्वरेदेयंजलमुष्णंपिपासवे पित्तमद्यविषोत्थेषुतिक्तकैः सृतशीतलं मुस्तापर्प्पटकोशीरचंदनोदीच्यनागरैः सृ तशीतजलंदद्यात्पिपासाज्वरशांतये उत्तमस्यपलंमात्रा त्रिभिश्चाक्षैस्तुमध्यमा जघन्यस्यपलार्द्धेनस्नेहक्वाथौष धेषुच मृदौचतुर्गुणंवारिकठिनेष्टगुणंमतं कठिनात्कठि नंयच्चतत्रषोडशिकंजलं पाययेदातुरंसात्म्यंपाचनंस प्तमेहनि नागरंदेवकाष्टंचधान्यकंवृहतीद्वयं दद्यात्पा चनकंपूर्वंज्वरितानांज्वरापहं सर्वज्वरेषुइदमनिषिद्धं पाचनं किरातकामृतोदीच्यवृहतीद्वयगोक्षरैः सस्थि राकलशीविश्वैःक्वाथोवातज्वरापहः पिप्पलीसारिवा द्राक्षाशतपुष्पाहरेणुभिः कृतःकषायःसगुडोहन्याच्चा निलजंज्वरं सक्षौद्रंपाचनंपैत्तेतिक्ताचेंद्रयवैःकृतं दुरा लभापर्प्पटकंप्रियंगुभूनिंबवासाकटुरोहिणीनां क्वाथं पिबेच्छर्करयावगाढंतृष्णास्रपित्तज्वरदाहयुक्तःएकः पर्प्पकःश्रेष्ठःपित्तज्वरविनाशनः किंपुनर्यदियुज्येतचंद नोदीच्यनागरैः वाग्भटात् हर्मेशकृच्चाभ्रसंकासेशशां

ककरशीतले मलयोदकसिंचेवास्वप्यात्पित्तज्वरीनरः
त्रिफलातिविषामुस्ताक्रमुकंसकलिंगकं पटोलारग्व
धंचैवरोहिणीचित्रकंसमं क्वाथःक्षौद्रयुतःश्लेष्मज्वर
कासगलामये आमलक्यभयाकृष्णाचित्रकश्चेत्ययं-
गणः सर्वज्वरकफातंकभेदीदीपनपाचनः कट्फलंपो-
ष्करंकृष्णाशृंगीचमधुनासह श्वासकासज्वरहरःश्रेष्ठो
लेहःकफांतकृत् सटीपुष्करमूलंचभार्गीशृंगीदुरालभा-
गुडूचीनागरंपाठाकिराततकटुरोहिणी एषःसुंठ्यादिको
वर्गःसान्निपातज्वरापहः काशहृद्ग्रहपार्श्वार्तिश्वासेतां
द्रेचशस्यतेसुंठ्यादिः भूनिंबदारुदशमूलमहौषधाब्दतिक्ते
न्द्रबीजधनिकेभकणाकषायः तंद्राप्रलापकसनारुचिदा
हमोहश्वासादियुक्तमखिलंज्वरमासुहंति अष्टादशांगः
शिरीषबीजगोमूत्रकृष्णामरिचसैंधवैः अंजनंस्यात्प्रबो
धायसरसोनशिलावचैः कर्णमूलेयदाशोफःसान्निपा
तज्वरेगते जायतेतत्रकर्त्तव्यंनावनंरक्तमोक्षणं लेहा
श्चकफवातघ्नाःकार्याःसकवलग्रहाः इतिसंनिपातः
ज्वराश्चविषमाःसर्वेसंनिपातसमुद्भवाः यथोल्वणस्य
दोषस्यतेषांकार्यंचिकित्सितं पटोलकटुकामुस्तापथ्या
नांमधुकस्यच त्रिवृतुःपंचमःक्वाथोविषमज्वरनाशनः
क्वाथःसततकेतिक्तापटोलसारिवाघनं तृतीयकेस्या-
द्भूनिंबगुडुचीनागरंघनं पटोलेंद्रयवद्राक्षामुस्तानिंबफ

लत्रिकं अन्येद्युष्के द्व्यंतरेषुगुडूच्यामलकंघनं वासा
धात्रीस्थिरादारुपथ्यानागरसाधितः सितामधुयुतः
क्वाथश्चातुर्थकनिवारणः पिवेत्सर्प्पटकंक्काथंगुडूच्या
वासकस्यच त्रिफलास्वरसंवापिश्लेष्मिकेविषमेज्वरे
निदिग्धिकानागरकामृतानांक्काथंपिवेन्मिश्रितपिप्प
लीकं जीर्णज्वरारोचककासभूलस्वासाग्निमांद्यार्दित
पीनसेषु रुद्रजटागोश्रृंगविडालविष्टोरगस्यनिर्मोकः
मदनफलभूनकेशीवंशलघुद्रानिर्माल्यं घृतयवमयूर
चंद्रकछागलरोमाणिसर्षपाःसवचाः समाहिंगुनिंबप
त्राःसमभागाश्छागमूत्रसंपिष्टाः धूपनविधिनाशमयं
त्येतेसर्वज्वरान्नियतं ग्रहडाकिनीपिशाचप्रेतविकारोप
नोदनोधूपः इतिज्वरेधूपः मंजिष्टाचहरिद्राचदेवदारु
हरीतकी श्रृंगवेरंत्त्यातिविषावचाकटुकरोहिणी हिंगुन
श्चाक्षमात्रेणतास्सिद्धमवतारयेत् एतन्मांजिष्टकंसर्पि
र्बहुरोगान्नियच्छति हिक्कांश्वासंज्वरंकुष्टंग्रहणींपांडु
रोगतां प्रमेहमधुमेहांश्चकृमीन्गुल्ममरोचकं कासंशो
षमुदावर्त्तमपस्मारंत्तथैवच अर्शांसिश्ववथुं चैवगंड
मालामथोदरं वेलाज्वरेमाजिष्टं घृतं लाक्षारसंसमादा
यतैलप्रस्थंचतुर्गुणं मस्तुनश्चाढकंदद्याद्द्व्यैरेभिश्चका
र्षिकैः मधुकेनहरिद्राभ्यांमुस्तेनसहमूर्वया रास्नया
कटुरोहिण्याचंदनेनाश्वगंधया शताह्वयाचकुष्टेनहरे

एवादेवदारुणा मंजिष्ठापद्मकोशीरवलामांसीभिरेव
च तत्सिद्धमथपूतंचस्थापयेद्राजनेशुभे जीर्णज्वर-
परीतानांक्षीणानांशोषिणांतथा विषमज्वरमोक्षार्थे-
श्वासकासार्दिताश्चये गुर्विणीनांचनारीणांबालानांशु
ष्यतामपि तैलंलाक्षादिकंनामसर्वज्वरग्रहापहं भे
डाज्वरेलाक्षादिकंतैलं शब्दस्योपरमेप्राप्तेफेनस्यो
पशमेतथा गंधवर्णरसादीनांसंपत्तौसिद्धिमादिशेत् क
लिकातः किराततिक्तंत्रिवृदंबुपिप्पलीविडंगविश्वकटु
रोहिरणीशिवाप्रपीतमुष्णंसकलज्वरापहंप्रवर्द्धनंजाठ
रजातवेदसः विगत क्लमसंतापमव्यथंविमलेंद्रियं॥
युक्तंप्रकृतिसत्वैश्चविद्यात्पुरुषमज्वरं व्यायामंचव्यवा
यंचस्नानंचंक्रमणानिच ज्वरमुक्तोनसेवेतयावन्नोबलवा
न्भवेत् इतिश्रीतोमरवंशावतंशरिपुभूतभैरवश्री
वीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशा-
स्त्रकर्मविपाकायुर्वेदोक्तप्रयोगोज्वराधिकारः अथ
क्रमप्राप्तस्यातीसारस्यज्योतिःशास्त्राभिप्रायेणहेतु-
माह तत्प्रतीकारंच यदुक्तं जातकेसारावल्यांच वल्लभ
मतिसारयुतंबहुभक्षंनिष्ठुरंप्रियालापं जनयतिरविना-
दृष्टः सौरिग्रहेबोधनःपुरुषं अन्यच्च शस्त्रपातनभेदश्च
ज्वरातीसारपीडनं शत्रुसंगोर्थनाशस्स्याच्छनेरंतर्गतेत्त
मे क्षिद्रस्थाविंदुशुक्रौचेदतीसारंविनिर्दिशेत् तत्रचे

स्वकुजःसुकः कुरुतेमलपातनं अष्टमस्थयोरिंद्रश्र
क्रयोःप्रीत्यैवक्ष्यमाणंजपहोमादिकंविधेयंशनिग्रहेर
विद्दष्टस्यबुधस्यबाधोपशांतयेतत्प्रतीकारकंदानादि
कमाह उद्बुध्यस्वेतिमंत्रस्यजपः तिलैरपामार्गस्यसमि
द्भिश्वजुहुयात् हेमदानंचदद्यात् स्नानंचयथाहश्री-
पतिःगोमयाक्षतफलैःसरोचनैःक्षौद्रसुक्तिभवमूलहे
मभिः स्नानमुक्तमिदमत्रभूभृतांबोधनाशभविना-
शनंबुधैः अंगेसुवर्णंधार्यं शनेरंतर्गतेराहो अतीसार
दर्शनेचकयानश्चित्रइतिमंत्रेणशक्त्याजपः तिलदूर्वा
समिद्भिश्चहोमःखड्गदानंराजावर्त्तपरिधानं शनैश्च
रोक्तंस्नानं अशिनातिलांजनैरित्यादिभिरौषधैरिति अ
थातीसाररोगस्यकर्मविपाकमाह अग्न्युपशमीअती
सारीभवति तडागभेत्ताच यदुक्तंपद्मपुराणे अतीसा
रीचभवतियश्चेताग्निविनाशकइति सोग्निरस्मीत्सूक्तं
जपेत् यथोक्तमेवदशसहस्रसंख्ययातिलाज्यद्रव्ये-
णजुहुयात् हिरण्यंदद्यात् अन्यत्र यथाहबोद्धाय
नःस्वर्णेनाथताम्रेणकुर्यात्प्रतिकृतिंबुधइति वन्हेर्वै
भवसारेणपलेनार्द्धेनवापुनः वन्हिप्रतिकृतिलक्षणं
तुलोकपालप्रसंगेन ब्रह्मांडदानेनदर्शितं तथाज्वाला
कुलारक्तचंदनेनविलेपितां रक्तवस्त्रेणसंवीतांमेषस्यो
परिसंस्थितां रक्तमाल्यैस्तुसंछन्नांमुक्तादामपरिस्कृ

तां कनकाचलवर्णाभांद्वादशार्कनिभांशुभां ब्रम्ह चर्यान्वितेविप्रेतपोनिष्ठेग्निहोत्रिणि अंगुलीयकवस्त्रा द्यैर्भूषितेतांनिवेदयेत् मंत्रेणानेनविधिवदग्निप्रीत्यर्थ माहृतः त्रेतारूपोग्निरीड्यस्त्वमंतश्चरसिदेवनृणां त्वं वेत्सिप्राक्तनंपापमतीसारंविनाशयएवंकृत्वानरःसम्य- गतीसारंव्यपोहति निरोगश्चसुखीनित्यंदीर्घमायुश्च विंदति इत्यतीसारहरवन्हिमूर्तिदानं अथातीसारे- सनिदानंचिकित्सितमाह रुग्विनिश्चयात् सशंम्यापां धातुरग्निंप्रवृद्धः शकृन्मिश्रोवायुनाधःप्रणुन्नः सरत्य तीवातिसारंतमाहु र्व्याधिंघोरंषड्डि धंतंवदंति एकैकशः सर्वशश्चापिदोषैः शोकेनान्यःषष्टआमेनचोक्तः हृन्नाभि पायूदरकुक्षितोदगात्रावशादानिलसंनिरोधाः वि- ड्डंगसाध्मानमथाविपाको भविष्यतस्तस्यपुरःसराणि लंघनमेकंमुक्त्वानचान्यदस्तीहभेषजंबलिनः समुदी र्णदोषनिचयंशमयति तत्पाचयत्यपिच अथवृंदसं ग्रहात् धान्योदीच्यसृतंतोयंतृष्णादाहातिसारिणे ह्रीबेरश्रृंगवेराभ्यांमुस्तापर्प्पटकेनवा बिल्वगोक्षुर कैरंडयवकांजिकसाधिता आमातीसारशूलघ्नीमधु युक्ताहरीतकी बिल्वशक्रयवांभोदनागरातिविषाकृ तः कषायोहंत्यतीसारंसामंपित्तसमुद्भवं सक्षौद्रातिविषाविषावत्सकस्यफलंत्वचं तंडुलोदकसंयुक्तंपेयंपि

त्वातिसारनुत् सवत्सकःसातिविषःसाबिल्वःसोदी
च्यमुस्तश्चकृतःकषायः सामेसशूलेसहशोणितेचवि
रप्रवृत्तेपिहितोतिसारे धान्यनागरमुस्तंचबालकंबि
ल्वमेवच आमशूलविबंधघ्नंपाचनंवन्हिदीपनं अवेद
नंसुसंपक्कंदीप्ताग्नेःसुचिरोथितं नानावर्णमतीसारंपु
टपाकैरुपाचरेत् त्वक्पत्रंदीर्घवृंतस्यपद्मकेसरसंयुतं
काश्मरीपद्मपत्रैश्चवेष्ट्यसूत्रेणतंदृढं मृदावलिप्तंसु
कृतमंगारैस्तद्विपाचयेत् स्विन्नमुद्धृत्यनिष्पाद्यरस
मादायतंततः शीतंकृत्वामधुयुतंपाययेदतिसारिणं
नितिरंलुंचितंसम्यक्निष्कृष्टंतच्चपूरयेत् न्यग्रोधादि
त्वचःकल्कैर्बध्वापक्कंचपूर्ववत् रसमादायतस्याथ
सुस्विन्नस्यसमाक्षिकं शर्करासहितंशीतंपाययेतो
दरामयी एवंप्ररोहैःकुर्वीतवटादीनांविधानवित् पुट
पाकान्यथायोगान्जागतोपहितान्शुभान् मुस्ता
वत्सकबीजंमोचरसोबिल्वधातकीरोध्रं मथितगुड
संप्रयुक्तंगंगामपिवाहिनींरुंध्यात् तुलामथार्द्रांगिरि
मल्लिकायाःसंकुट्यपक्कारसमाददीत तस्मिन्सुपू
तेपलसंमितानिश्लक्ष्णानिपिष्ट्वासहसाल्मजेन पाठा
समंगातिविषासमुस्तांबिल्वंचपुष्पाणिचधातकीनां
प्रक्षिप्यभूयोविपचेच्चतावद्दर्वीप्रलेपःस्वरसस्तुयाव
त् पीतस्त्वसौकालविदाजलेनमंडेनवाजापयसाथवा

पि निहंतिसर्वत्वतिसारमुग्रं कृष्णंसितंलोहितपीतकं वा दोषंग्रहण्याविविधंचरक्तंपित्तंतथार्शांसिससशोणितानिअसृग्दरंचैवमसाध्यरूपंनिहंत्यवश्यंकुटजाष्टकोयं यथामृतंतथाक्षीरमतीसारेषुपूजितं निरोत्थितेषु तस्येयमपांभागैस्त्रिभिःसृतं अर्धावर्त्तंचतुर्थांशमष्टभागवशेषितं अतीसारेषुपानीयमधिकस्याधिकंफलं वायुःप्रवर्त्ततेधस्तादूर्ध्ववातश्चगच्छति यस्योच्चारंविनामूत्रंसम्यग्वायुश्चगच्छति दीप्ताग्नेर्लघुकोष्टस्यास्थितस्तस्योदरामयः इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगोतीसाराधिकारः अथग्रहणीरोगस्यज्योतिःशास्त्राभिप्रायेण हेतुमाह यदुक्तंसारावल्यां प्रचुरामित्रस्तीक्ष्णोमृदुकायाग्निर्मदालसश्चंद्रे षष्टेचोदररोधकभावैःपरिपीडितोभवति अन्यच्चजातके क्षीणेंदुदशायोगेचिन्हान्येतानिलक्षयेद्विद्वान् उदरामयज्वरशिरोनयनोत्क्लेशः प्रजायतेपुंसां अत्रउदरामयग्रहण्यादयः तदुपशांतये चंद्रप्रीतयेजपहोमादिकंकुर्यात् इमंदेवाइतिमंत्रेणजपःस्वशाखोक्ततल्लिंगमंत्रेणवाव्याधितारतम्येनतिलाज्यपलाशसमिद्भिर्होमः शंखदानंच स्नानंचयथाहश्रीपतिः पंचगव्यगजदानविमिश्रैः शंखसुक्तिकुमुदस्फ

टिकैश्च शीतरश्मिकृतवैकृतहंतृस्नानमेतदुदितंनृप-
तीनां भुजाभ्यांमुक्ताफलंधार्यंपायसंनैवेद्यंनिवेदये
त् तेनोपशांतिर्भवति अथग्रहणीरोगस्यकर्मविपाक
माह यःपुनः तुष्टांभार्यामनन्यगतिकांकारणमंतरेणप
रित्यजति सःजन्मांतरेसंग्रहणीरोगवान्भवति शिव
संकल्पसूक्तमष्टोत्तरसहस्रंजपेत् मधुहिरण्यंचदद्या-
त् साध्वींभार्यांचयोमर्त्यःपरित्यजतिकामतः ग्रहणी
रोगसंयुक्तःसदाभवतिमानवः शिवसंकल्पसूक्तेनज
पेदष्टोत्तरंशतं इतिशिवगीतावचनात् धेनुंसलक्षणां
दद्यात्सवत्साभरणान्वितां पयस्विनींगुणोपेतांब्राह्मणा
यविशेषतः पद्मपुराणे ग्रहणीवानपत्याह गौतमः धे
नुंपयस्विनींदद्याद्घंटाभरणभूषितां हेमशृंगींरौप्यखुरां
वासोभिर्वेष्टितांनरः नवधान्यैःसमायुक्तामेकैकंद्रोणपं
चकं सहिरण्यांतुगांदद्याद्ब्राह्मणायकुटुंबिने अलोलु
पायशांतायधर्मज्ञायविशेषतः होमंचपूर्वंधत्कुर्यात्समि
दाज्यचरूत्करैः ———— तस्मैहुतवतेदद्यात्पूजितायांगु
लीयकैः गांकृष्णांकृष्णारूपायमंत्रेणानेनरोगवान् देव
कीपुत्रचाणूरकंसारिष्टविनाशन नाशयग्रहणींकृष्ण
गोपीजनमनोहर दानमंत्रः मंत्रेणानेनदानेनग्रहणी
शांतिमिछति तस्मादेतच्चकर्त्तव्यंग्रहणीरोगिणांसदा
इतिग्रहणीहरधेनुदानविधिः अथग्रहणीरोगस्यस-

निदानंचिकित्सितमाह रुग्विनिश्चयात् अतीसारे निवृत्तेपिमंदाग्नेरहिताशिनः भूयःसंदूषितोवन्हिर्ग्रह णीमपिदूषयेत् एकैकशःसर्वशश्चापिदोषैरत्यर्थमूर्छि तैः सादुष्टाबहुशोभुक्तमाममेवविमुंचति पक्वंवासरु जंभूतिमुहुर्बद्धंमुहुर्द्रवं ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः षष्ठीपित्तधरानामयाकला परिकीर्तिता पक्वा-माशयमध्यस्थाग्रहणीतांविदुर्बुधाः ग्रहणीमाश्रितंदो षमजीर्णवदुपाचरेत् अतीसारोक्तविधिनातस्यामंच-विरेचयेत् कपित्थबिल्वचांगेरीतक्रदाडिमसाधिता य वागूःपाचयत्यामंशकृत्संवर्तयत्यपि लघुनापंचमूलेन-पंचकोलेनपाचयेत्अन्नानिकल्पयेद्विद्वान्बिल्ववृक्षा-म्लदाडिमैः ग्रहणीदोषिणांतक्रंदीपनंग्राहिलाघवं अम्लं मधुरपाकित्वान्नचपित्तप्रकोपनं श्रीफलशलाटुकल्को नागरचूर्णेनमिश्रितःसगुडः ग्रहणीगदमत्युग्रंतक्रभुक् शीलितोजयति नागरातिविषामुस्ताक्काथःस्यादामपा चनः चूर्णंहिंग्वष्टकंवापिवातिकेष्टपलंघृतं नागराति विषामुस्ताधातकीसरसांजनं वत्सकत्वक्फलंबिल्वंपाठां कटुकरोहिणीं पिबेत्समांसकंचूर्णंसक्षौद्रंतंडुलांबुना पैत्तिकेग्रहणीदोषेरक्तंयस्योपवेश्यते अर्शांस्यथगुदे शूलंजयेच्चैवप्रवाहिकां नागराद्यमिदंचूर्णंकृष्णात्रेयेण पूजितं जलमष्टगुणंदद्यात्सलंकंडिततंडुला भावयित्वा

ततोदेयंतंडुलोदककर्मणित्र्यूषणात्रिफलाकल्केबिल्व मात्रेगुडात्पले सर्पिषोष्टपलंदत्वामात्रांमंदानिलःपिबेत् विश्वौषधस्यगर्भेणदशमूलजलेसृतं घृतंनिहंतिश्वय थुंग्रहणींसामजामपि यवानीपिप्पलीमूलचातुर्जातक नागरैः मरिचाग्निजलाजाजीधान्यसौवर्च्चलैःसमैः वृ क्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः त्रिगुणैःष ड्गुणसितैःकपित्थ ष्टगुणीकृतैः चूर्णोतिसारग्रहणीक्ष यगुल्मगलामयान् कासश्वासाग्निसादार्शःपीनसारो चकान्जयेत् वाग्भटादतीसारेकपित्थाष्टकंचूर्णं क र्षोन्मितातुगोक्षीरी चातुर्ज्जातंद्विकार्षिकं यवानीधा न्यकाजाजीग्रंथिव्योषंपलांशकं पलानिदाडिमस्याष्टौ सितायाश्चैकतःकृतः गुणैःकपित्थाष्टकश्चूर्णोयंदाडि माष्टकः शमसर्क्करोद्विगुणशर्करोवा वाग्भटादतीसा रेदाडिमाष्टकंचूर्णं इतिश्रीतोमरवंशावतंसरिपुभूत भैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्यो तिःशास्त्रेकर्मविपाकायुर्वेदोक्तप्रयोगोग्रहण्यधिकारः अथज्योतिःशास्त्राभिप्रायेणार्शोरोगप्रयोगमाह य दुक्तंजातके कर्कटस्थेभानौस्वपुत्रदृष्टेपुमान्पिशुनः दुर्नामकुष्टरोगैरभिभूतोनिर्दयोविगतलज्जः कर्कस्थि तस्यशनिदृष्टस्यसूर्यस्यबाधोपशांतये जपदानादिवि धिमाह आकृष्णेतिमंत्रेणजंपः तिलार्कसमिद्घृतैर्होमः

गुडोदननैवेद्यं व्याधिता रतम्येनयथोक्तांधेनुंचदद्या
त् स्नानंचयथाहश्रीपतिः मनःशिलैलासुरदारुकुंकु
मैरुशीरयष्टीमधुपद्मकान्वितैः सताम्रपुष्पैर्विषमस्थि
तेरवौशफभावहंस्नानमुदाहृतंबुधैः विद्रुमंचधार्यं अ
थार्शोरोगस्यकर्मविपाकमाह तत्प्रतीकारंचवेतनमा
दाययोध्यापयत्यर्च्चयतिजुहोमीति जपति सअर्शो-
रोगवान्भवति सकृछ्रातिकृछ्रचांद्रायणानिकृत्वापुरु
षसूक्तं उघन्नमृचंविवस्वतहृदयंवाअग्निवर्णमित्यादि
सूक्तंव्याधिगुरुलघुभावेनवापेक्षयाजपेत् सघृतं-
हिरण्यंचदद्यात् श्रोत्रियायकुटंबिनेकुटुंबपर्याप्तं
धनंदद्यात् एतन्महाधनिविषयं श्रोत्रियायकुलीना
यत्द्यार्थिनेचविशेषतः असाध्यव्याधिनाग्रस्तोधनंद
द्याद्विशांपते इतिब्रह्मगीतावचनात् इत्यर्शोघ्नप्र-
कारः पद्मपुराणे अर्शवान्गोवधोमर्त्यः बौद्धायनः
सौवर्णीगांप्रकुर्वीतपलेनार्द्धेनवापुनः वित्तशाठ्यंनकु
र्वीतविभवेसतिरोगवान् हेमशृंगीरौप्यखुरींनानाव
स्त्रैरलंकृतां गृहाणामुपरिस्थाप्यधनधान्यानिविन्य
५ सेत् होमस्तुपूर्वत्कार्योगोविंदप्रीतयेहितः इदंविष्णुःप्र
भुर्विष्णुःविष्णोःसूक्तमितिक्रमात् सामिदाज्यचरुंहु-
त्वापूर्णाहुतएवहि ततस्तांशफचिमान्रोगीब्राह्मणंवेद-
पारगं श्रुतवृत्तोपसंपन्नंकुलीनंधर्मवादिनं॥वृद्धंज्ञानो

पसंपन्नंनिरुहेगकरंनृणां भक्त्यास्वयंसमानीयपूज
येत्प्रीतयेद्विजं अंगुलीयकवस्त्राद्यैरुपानच्छत्रकैरपि
मंत्रेणानेनतस्मात्रंदद्याद्रोगीजितात्मवान् गोविंदंमन
साध्यायन्गवांमध्येस्थितंशुभं बर्हापीडकसंयुक्तंवेणु
वादनतत्परं गोपीजनैःपरिवृतंवन्यपुष्पावतंसकं गो
विंदगोपीजनवल्लभेशकंसासुरघ्नत्रिदिवेंद्रवंद्य गोदा
नतृप्तःकुरुमेदयालोअर्शोविनाशंक्षपितारिवर्ग दानेना
नेन नितरामर्शःसंजायतेक्षयं तस्मात्कुर्यात्प्रयत्नेन
सुखार्थीत्विदमर्शसि इत्यर्शोघ्नःस्वर्णगोदानविधिः
अथक्रमप्राप्तस्यार्शोरोगनिदानंचिकित्सितमाह रु
ग्विनिश्चयात् पृथग्दोषैःसमस्तैश्चशोणितात्सहजा-
नि च अर्शांसिषट्प्रकाराणिविद्याद्गुदवलित्रये दोषा
स्त्वग्मांसमेदांसिसंदूष्यविविधाकृतीन् मांसांकुरा-
नपानादौकुर्वंत्यर्शांसितान्जगुः कलिकातः तत्रार्श
सामुपदिशंतिचतुःप्रकारमारोग्यमेकमगदैरपरंचश
स्त्रैः क्षारेणचान्यदनलेनचतुर्थमित्थमित्सामयैककृति
नःकिलसुश्रुताद्याः अर्शोतिसारग्रहणीविकाराःप्राये
णचान्योन्यनिदानभूताः मंदेनलेसंप्रभवंतिसर्वेदीप्ते
तुशांतिसहसाव्रजंति एषयोरनलोम्यायपद ग्निबलवृद्ध
ये अन्नपानौषधंसर्वंतत्सेव्यंनित्यमर्शसि वृंदसंग्रहा
त् वातातिसारवद्भिन्नवर्चस्यर्शांस्युपाचरेत् उदाव-

र्त्तविधानेनगाढविड्वानिवासकृत् प्रवृत्तबहुलास्रा णि
पित्तशोणितनाशनैः विड्विबंधेहितंतक्रंयवानीविश्व
संयुतं नप्ररोहंतिगुदजाःपुनस्तक्रसमाहताःस्रोतःसु
तक्रमुक्तेषुरसःसम्यगुपैतियः तेनपुष्टिर्बलंवर्णःप्र
हर्षश्चोपजायते वातश्लेष्मविकाराणांशतंचविनि
वर्त्तते सगुडांपिप्पलीयुक्तामभयांघृतभर्ज्जितां तृ
वृद्दंतीयुतांवापिभक्षयेदनुलोमिकां तिलारुष्कर
संयोगं भक्षयेदग्निवर्द्धनं कुष्टरोगहरंश्रेष्टमर्शसां
नाशनंपरं तिलभल्लातकंपथ्यागुडश्चेतिसमांसकं दु
र्न्नामश्वासकासघ्नंप्लीहपांडुज्वरापहं मृल्लिप्तंसूरणंकं-
दंपक्त्वाग्नौपुटपाकवत् अद्यात्सतैललवणंदुर्न्नामवि
निवृत्तये सनागरारुष्करवृद्धदारुकंगुडेनयोमोदकम
त्त्युदारकं अशेषदुर्न्नामकरोगदारकंकरोतिवृद्धंसह
सैवदारकं लाक्षाहरिद्रामांजिष्टामधुकंनीलमुत्पलं
अजाक्षीरेणसंपीतंरक्तजार्शोविनाशनं नवनीतति
लाभ्यासात्केशरनवनीतशर्कराभ्यासात् दधिसार
मथिताभ्यासाद्गुदजाःशाम्यंतिरक्तवहाः रास्नामेरंड-
मूलंचमधुकंदेवदारुचयवचूर्णेनयुक्तानियवचूर्णेनसा
धयेत् तेनोपनाहंकुर्वीतस्वेदयेच्चपुनःपुनः तेनार्शांसि
समंयातिवेदनाचनिवर्त्तते शिरीषबीजंद्वौक्षारौलांग
लीसैंधवंवचा स्नुहीक्षीरेणपिष्टानिगवांपित्तेनभावये

तु अर्शांसिलेपयेत्तेन सप्तरात्रंपुनःपुनः लिप्तान्येते नसर्वाणिविनश्यंतिनसंशयः त्रिवृत्तेजोवतीदंतीश्वदं- ष्ट्राचित्रकंसटी गवाक्षीविश्वमुस्ताव्हाविडंगानिहरी तकी पलोन्मितानिचैतानिभल्लातकपलाष्टकं पलानि षड्वृद्धदारुःषोडशैवतुशूरणात् जलद्रोणद्वयेक्काथंचतु र्भागावशेषितं पूतंरसंतुतंदत्वाक्काथेभ्यस्त्रिगुणंगुडं लेहंपचेद्धितंतावद्यावद्दर्वीप्रलेपनं तार्यनततःपश्चाच्चू र्णानीमानिदापयेत् त्रिवृत्तेजोवतीकंदंचित्रकंद्विपलां शकं एलात्वक्पत्रनागाव्हप्रत्येकंचापिषट्पलं द्वात्रिंश त्पलिकंचेहचूर्णंकृत्वाप्रदापयेत् ततोमात्रांप्रयुंजीत- जीर्णेक्षीररसाशनः पंचगुल्मान्प्रमेहांश्चपांडुरोगंहली मकं जयेदर्शांसिसर्वाणितथासर्वोदराणिच दीपये द्ग्रहणीमेषयक्ष्माणंचापकर्षति पीनसेचप्रतिश्यायेआ ढ्यवातेतथैवच अयंसर्वगदेष्वेवकल्याणोलेहउत्तमः दुर्नामानिहरत्याशुदृष्टोवारसहस्त्रशः भवत्यनेनपुरु षःशतवर्षनिरामयः दीर्घायुषश्चजननोवलीपलित नाशनः रसायनवरश्चैवमेधावर्द्धनउत्तमः गुडश्चैबा हुशालोयंदुर्नामारिःप्रकीर्त्तितः इतिबाहुशालोगुडः पथ्यापंचपलान्येकमजाज्यामरिचस्यच पिप्पलीपिप्प लीमूलचव्यचित्रकनागरैः पलानिवृद्ध्या क्रमशोय वक्षारंपलद्वयं भल्लातकपलान्यष्टौकंदस्तुद्विगुणोमतः

द्विगुणेनगुडेनैषांवटकानक्षसंमितान् एकैकंभक्षये त्प्रातस्तक्रमम्लंपिबेदनु वन्हिंसंदीपयत्याशुग्रहणी पांडुरोगजित् कांकायनेनशिष्येभ्यःशस्त्रक्षाराग्नि- भिर्विना कथितोवटकोत्स्येषगुदजानांविनाशनः इ तिकांकायनोमोदकः त्रिफलादशमूलानिनिःकुंभानां पलंपलं वारिद्रोणेसृतंपादशेषेगुडतुलायुतं आज्य भांडास्थितंमासंदंत्यरिष्टोनिषेवितः इतिदंत्यरिष्टः गुदजकुम्युदावर्त्तग्रहणीपांडुरोगहा भल्लातकानि फलादंतीचित्रकमेवच एतानिसमभागानिसैंधवं- द्विगुणंभवेत् कपालाग्नौभवेत्पक्कं मृदुनागोमयाग्नि ना एतत्कल्याणलवणंश्रेष्टमर्शोधिकारिणं इतिक ल्याणलवणं अथाहसुश्रुताचार्यः यथासर्वाणिकु ष्टानिहृतःखदिरवीजको तथैवार्शांसिसर्वाणिवृक्ष कारुष्करोहृतः हरिद्रायाप्रयोगेनप्रमेहाइवषोडश क्षाराग्निभ्यांनिवर्तंन तथाहृश्यागुदोद्भवाः घृतानि दीपनीयानिलेहायस्कृतयःसुराः आसवाश्चप्रयोक्त व्यावीक्ष्यदोषसमुच्छितिं वेगावरोधःस्त्रीपृष्टयाना- न्युत्कटकासनं यथास्वंदोषलंचान्नमर्शसीपरिव- र्जयेत् इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्री वीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिः शास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगोर्शोधिकारः ॥

अथानुक्रमप्राप्तमजीर्णमंदाग्निप्रयोगंज्योतिःशास्त्रा
भिप्रायेणदर्शयति यदुक्तंजातके अतिपरिभूतःकृ
पणःसहजयुतोमानवोभवतिजीवे मंदाग्निःस्त्रीवियु
तोदुश्चिक्येपापकर्माच अन्यच्च अल्पोदराग्निपुंस्त्वः
परिभूतोदुर्बलोलसःषष्टे स्त्रीवियुतोरिपुहंताजीवेपु
रुषोतिविख्यातः तज्जनितार्जीर्णमंदाग्नितत्प्रशांत्य
र्थंलिख्यते यथोक्तंजपहोमादिकंकुर्यात् बृहस्पतेअ
तियदितिमंत्रेणजपः तिलाज्याश्वत्थसमिद्भिर्होमःपी
तवासोदानंस्नानंच मालतीकुसुमशुभ्रसर्षपैः पल्लवै
श्चमदयंतिकोद्भवैः मिश्रमंबुमधुकेनचस्फुटंवैकृतंगु
रुकृतंनिकृंतति पुष्परागंमौक्तिकंवाधारयेत् दध्योदनं
नैवेद्यंनिवद्यं अथाजीर्णमंदाग्निजनितरोगेकर्मविपा
कं तत्प्रतीकारंच अन्नहृत्तत्विजीर्णवान्भवति अ
स्यप्रायश्चित्तं उपवासत्रयंवयोऽवस्थानुसारेणकुर्या
त् अग्निरस्मीत्यनेनमंत्रेणअष्टोत्तरसहस्रंजपेत्
चरुघृताभ्यांचजुहुयात् यदुक्तमृग्विधाने यस्यभुक्तं
नजीर्येतननातिष्ठेच्छाकथंचन तस्यान्नस्यानुरो धत्वा
दग्निरस्मीत्सत्वंजपेत् अथवावार्धुषिकस्यान्नंतस्य
शूद्रस्यसंबध्यन्नंभुक्त्वाजीर्णार्तिःशूलव्याधिरोगवान्
भवति शूद्रस्यैवतुभुक्त्वान्नमन्नतस्याद्द्विजस्यचशूल
व्याधिर्भवेन्नित्यमजीर्णामयपीडितः तत्रोपवासत्रयंकु

र्यात् शङ्करजतपलत्रयसंमिश्रमन्नंश्रोत्रियायकुटुं
बिनेदद्यात् प्रकारांतरेणापि गोमांसखादकोमंदज्व
राग्निर्भवति अग्निसूक्तंजपेन्नित्यंश्रीसूक्तंचधिचक्ष
णः इतिवृद्धपराशरवचनात् प्रकारांतरमपि यःपुनः
कारणमंतरेणगरंदत्वाप्रमादयतिसमंदाग्निर्मृतकल्पो
जायतेअतोरुद्रसूक्तेनचरुघृताभ्यामष्टोत्तराधुतंजुहु
यात् तमग्निवर्णमित्यष्टोत्तरशतंजपेत् रोगमुक्तोभवे-
न्नरः इतिवचनात् चत्वारिंशद्ब्राह्मणान्भोजयेत् प्र
कारांतरमपि यथाहबौद्धायनः अग्नेर्मंद्यंभवेत्तस्यय
स्त्वेताग्निविनाशकः वक्ष्यामितत्प्रतीकारंयथोक्तंब्रह्म
णापुरा पलार्द्धेननदर्धेनतदर्धेनाथवापुनः राजतंकार
येत्सम्यक्अग्नेर्वाहनमुत्तमं सौवर्णस्यखुराःकार्याः
श्वेतवस्त्रेणवेष्टयेत् श्वेतमाल्यैःश्वेतगंधैर्धूपंदद्यान्म
धूत्कटं तंडुलोपरिसंस्थाप्यपुनःसंपूजयेत्सुधीः तंडुला
नांपरीमाणंद्रोणहूयमुदाहृतं अग्नयांदिशिहोमश्च
समिदाज्यतिलैरपि वषड्ढविष्यावे इतिमंत्रेणसमिद्धो-
मःप्रशस्यते अग्नेनयेत्याज्यहोमोप्यग्निनाग्निस्तिला
क्षतैः मंत्राध्यायोक्तमार्गेणवन्हिसंस्थापनंस्मृतं अग्नेः
प्रागुत्तरेदेशेशुभंपात्रंचधिन्यसेत् प्रणीतामोक्षपर्यंतं-
कृत्वास्नानंविधीयते आपोहिष्टेतिप्रत्यृचंहिरण्येतिप्रा
चंतथा पवमानानुवाक्येनमार्ज्जयेद्रोगिणंकुशैः श

न्त्रोवातानुवाक्येनशांतिर्वाविप्रकल्पयेत् तस्मैहुत-
वतेरोगीप्राङ्मुखायउदङ्मुखः पूजितायचशांतायद
द्यादन्नंसदक्षिणं देवानांयोमुखंहव्यवाहनःसर्वपूजि
तः तस्यत्वंवाहनःपूज्यःदेवैःसेंद्रैर्महर्षिभिः अग्निमांद्यं
पूर्वकर्मविपाकोस्यतुयन्मम तत्सर्वनाशयक्षिप्रंजठरा
ग्निंप्रवर्द्धय दानमंत्रः एवंविप्रायथोदद्यादग्नेर्वाहन
मुत्तमं वडवानलवान्मर्त्योजीवेद्वर्षशतंपुनः ततःस्वबं
धुभिर्विप्रैःस्नात्वाभुंजीतमानवः इत्यग्निमांद्यहरमे
षदानविधिः अथक्रमप्राप्तस्याजीर्णरोगस्य सनि
दानंचिकित्सितमाह रुग्विनिश्चयात् मंदस्तीक्ष्णो
थविषमः समश्चेतिचतुर्विधः कफपित्तानिलाधिक्यां
त्तत्साम्याज्जाठरोनिलः विषमोवातजान्रोगांस्तीक्ष्णः
पित्तनिमित्तजान् करोत्यग्निस्तथामंदोविकारान्कफ
संभवान् समासमाग्नेरशितामात्रासम्यग्विपच्यते
स्वल्पोपिनैवमंदाग्ने विषमाग्नेस्तुदेहिनः कदाचित्स
च्यतेसम्यक्कदाचिन्नविपच्यते मात्रातिमात्राप्यशिता
सुखंयस्यविपच्यते तीक्ष्णाग्निरितितंविंद्यात्समाग्निः
श्रेष्ठउच्यते कफेक्षीणेयदापित्तंस्वस्थानेमारुतानुगं
तीव्रंप्रवृद्धयेदग्निंतदातंभस्मकंवदेत् आमंविदग्धं
विष्टब्धंकफपित्तानिलैस्त्रिभिः अजीर्णंकेचिदिच्छंति
चतुर्थंरसशेषतः अजीर्णंपंचमंकेचिन्निर्दोषंदिनपाकि

च वदंतिषष्टंचाजीर्णंप्राकृतंप्रतिवासरं अत्यंबुपाना
द्विषमाशनाच्चसंधारणात्स्वप्नविपर्ययाच्च कालेपिसा
त्म्यंलघुचापिभुक्तमन्नंनपाकंभजतेनरस्यईर्ष्याभ
यक्रोधपरिक्षितेन क्षुब्धेनिक्षुद्दैन्यमिपीडितेन प्रहर्ष
युक्तेनचसेव्यमानमन्नंनपाकंलभतेनरस्य शूचीभि
रिवगात्राणितुदन्संतिष्ठतेनिलः यस्याजीर्णेनसावैद्यै
र्विशूचीतिनिगद्यते यत्रस्थमामंविरुजेत्तमेवदेशंवि
शेषेणविकारजातैः दोषेणयेनावततंशरीरंतल्लक्षणै
रामसमुद्भवैश्च यःश्यावदंतोष्ठनखोल्पसंज्ञःछर्द्यर्दि
तोभ्यंतरजातनेत्रः क्षामस्वरः सर्वविमुक्तसंधिः याया
न्नरोसोपुनरागमाय वृंदसंग्रहात् ससमस्यरक्षणंका
र्यंविषमेवातनिग्रहः तीक्ष्णेपित्तप्रतीकारोमंदेश्लेष्म
विशोधनं वचालवणतोयेनवांतिरामेप्रशस्यते धा
न्यनागरसिद्धंवातोयंदद्याद्विचक्षणं आममामप्रश
मनंशूलघ्नंबस्तिशोधनं विष्टब्धेस्वेदनंकार्यंपेयंवा
लवणोदकं रसशेषेदिवास्वप्नोलंघनंवमनंतथा व्याया
मग्नमदाध्ववाहनरथक्रांतानतीसारिणःशूलस्वा
सवतस्तृषापरिगतानूहिक्कामरुत्पीडितान् क्षीणान्
क्षीणकफानूशिशून्मदहतान्वृद्धान्नसाजीर्णिनोरात्रौ
जागरितान्नरान्निरशनान्कामंदिवास्वापयेत् पथ्या
पिप्पलिसंयुक्तंचूर्णंसौवर्चलंभवेत् मधुनोष्णोदकेना

थमत्वाद्दोषगलिंभिषक् चतुर्विधमजीर्णंतुमंदानल
मथारुचिं आध्मानवातगुल्मंचशूलंचाशुनियच्छति
आरोग्यचिंतामणेः मातुलुंगीज. टाव्योषनिशाबीजं
करंजकंकांजिकेनांजनाद्धन्याद्विसूचीमतिदारुणांद्य
मोदरमतात् वराव्योषाग्निबिल्वोग्रांविषाद्यैःसगुडैर्व
टीः॥त्रिगुंजाजीर्णशूलार्तिवातश्लेष्मगदापहा हिंगुभा
गोभवेदेकोवचाद्विगुणिताभवेत् पिप्पलीत्रिगुणाचात्र
शृंगवेरंचतुर्गुणं यवापंचगुणाज्ञेयाषड्गुणाचहरीतकी
चित्रकंसप्तगुणितंकुष्टंचाष्टगुणंभवेत् एतद्वातहरंचू
र्णंपीतमात्रंप्रशांतयेत् पिबेद्दध्नामस्तुनावासुरयाको
ष्णवारिणा सोदावर्त्तमजीर्णंचप्लीहानमुदरंतथा अं
गानियस्यशीर्यंतिविषंवायेनभक्षितं अर्शोहरंदीप
नंचशूलघ्नंगुल्मनाशनं कासंश्वासंनिहंत्याशुतथैवक्ष
यनाशनं चूर्णमग्निमुखंनामनक्वचित्प्रतिहन्यते इ
तिअग्निमुखंचूर्णं त्रिकटुकमजमोदासैंधवंजीरकेद्वे
समधरणधृतानामष्टमोहिंगुभागः प्रथमकवलभुक्तं
सर्पिषाचूर्णमेतज्जनयतिजठराग्निंवातरोगान्निहंति
हिंगूग्राम्लषडूषणंत्रिलवणाद्विक्षारपाठासटीपथ्यादा
डिमजीरधान्यहपुषावृक्षाम्लरुग्दीप्यकं लुंगार्द्रीप्लुत
मन्नकोष्णजलसुक्गुल्माग्निमांद्यारुचिप्लीहार्शोगल
गंडत्द्धृद्ग्रहणिकानाहास्थसर्वार्त्तिजित् योगरत्नावलीतः

विजया पिप्पलीसुंठीभिसमंपरिकीर्त्तितं अग्निसंदी
पनंनृणांत्रिदोषामयनाशनं उद्गारशुद्धिरुत्साहोवेगो
त्सर्गोयथोचितः लघुताक्षुत्पिपासेच्दजीर्णाहारस्यल
क्षणं इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीर
सिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्र
कर्मविपाकायुर्वेदोक्तोअजीर्णाधिकारः अथा कमा
गतंकृमिरोगोत्पत्तिंप्रतीकारंज्योतिःशास्त्राभिप्रायेण
व्याचष्टेयथोक्तंजातके संत्नारहितोविकलोव्याधिवि
बंधकृमिक्षपितदेहः निधनस्थेरजनीकरेस्वल्पायुर्भ
वति सक्षीणे वचनांतरमपिजातके शत्रुगृहेकदशा
यांनयनविनाशोभवेच्चकुब्जत्वं ज्वालागर्दभरोगैःभवं
तिकृमयःपराभूतिः अष्टमस्थानस्थितचंद्रजनितकृ
मिरोगप्रतीकारायप्रागुक्तंविधानंचंद्रप्रीतयेविधिवद्दि
दध्यात् प्रागुक्तंसूर्यबाधोपशांतयेयदुक्तंतद्विदध्या
त् अथकृमिरोगकर्मविपाकंतत्प्रतीकारंचाह कुंज
रधेनुश्वघातीचकृमिकुक्षिर्भवेन्नरः सनीलवृषभा
न्दद्यात्ब्राह्मणेभ्यश्चभोजनं मृतेभर्तरियानारीनील
वस्त्रंप्रधारयेत् साकृतानरकंयातिकृमिकुक्षिस्ततःपर
मितिवचनात् ततः परमितिजन्मांतरमित्यर्थः इति
कृमिकुक्षिहरोवृषभदानविधिः अथकृमिरोगस्यस
निदानंलक्षणमाह रुचिनिश्चयात् कृमयस्तुद्वि

धाप्रोक्तावात्याभ्यंतरभेदतः वहिर्मलकफासृग्विड्ज
न्मभेदाच्चतुर्विधाः नामंतोविंशतिर्धावात्यास्तत्रमलो
द्भवाः तिलप्रमाणसंस्थानावर्णाःकेशांबराश्रयाः बहुपा
दाश्चसूक्ष्मांश्चयूकालिक्षाश्चनामतः द्विधातेकोठपिड
काकंडूगंडान्प्रकुर्वते अजीर्णभोजीमधुराम्लनित्यद्रव
प्रियः पिष्टगुडोपभोक्ता व्यायामवर्ज्जीचदिवाशयीचवि
रुद्धभुक्संलभतेक्रमींश्च माषपिष्टान्नलवणगुडशा-
कैःपुरीषजाः मांसमाषगुडक्षीरदधिसुक्तैःकफोद्भवाः
विरुद्धाजीर्णशाकाद्यैःशोणितोत्थाभवंतिहि ज्वरोवि
वर्णताशूलंहृद्रोगः श्वसनंभ्रमः भक्तद्वेषोतिसारश्च
संजातकृमिलक्षणं वृंदसंग्रहात् मुस्ताखुकर्णीफल-
दारुशिग्रुक्वाथःसकृष्णाकृमिशत्रुकल्पःमार्गद्वयेना
पिचिरप्रवृत्तान्कृमीन्निहंतिकृमिजांश्चरोगान् पारसी
कायवानीपीतापर्युषित्तवारिणाप्रातः गुडपूर्वाकृमिजा
तंकोष्टगतंपातयत्याशु पलाशबीजस्वरसंपिबेद्वाक्षौ
द्रसंयुतं लीढ्वाक्षौद्रेणवाविडंगंचूर्णंकृमिनिवारणं दाडि
मीत्वक्कृतः क्वाथस्तिलतैलेनसंयुतः दिनात्पातयसेषको
ष्टतःकृमिजालकं ककुभकुसुमंविडंगलांगलिभल्लात
कंतथोशीरं श्रीवेष्टंसर्ज्जरसंचंदनमथचाष्टमंदद्यात्
एषःसुगंधोधूपोमशकानांविनाशकः श्रेष्टशय्यासम
प्यानांशिरसिचगात्रेषुयूकानां भंडीपिष्टारनालेनगो

मूत्रेणातिभुक्तकः कुणटीकटुतैलेनयोगोयूकापहा स्त्वयं इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्री वीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिशास्त्र कर्मविपाकायुर्वेदोक्तप्रयोगकृमिविकाराधिकारः अथ- पांडुरोगस्यजातकाभिप्रायेणहेतुमाह तत्प्रतीकारंच ब्राम्हेमंडलयुक्तोनृशंशकर्म्मोत्थनेकदुःखःस्यात् अ ष्टमराशौरविजेक्षयादिव्याधिभिस्तप्तः अत्रआदिशब्दे नपांडुरोगोपिगृह्यते तदुपद्रवत्वात् अन्यच्च सिंहांसे वर्त्तमानेचंद्रेपिपांडुरोगोद्भवोजायते तदुक्तं पांडुस्ती- क्ष्णोल्पपुत्रइतिवचनात् अष्टमांशस्थितशनिजनित पांडुरोगप्रतीकारायशनिप्रीतयेपूर्वोक्तमेवसकलंजप- होमादिकंविधानंकुर्य्यात् तथाच सिंहांशवर्त्तमानचंद्र जनितपांडुरोगप्रतीकारायचंद्रप्रीतयेयथोक्तंविधिवद्वि धानंकुर्यात्तेनोपशांतिर्भवति इतिपांडुरोगप्रतीकार विधिः अथपांडुरोगस्यकर्मविपाकमाचष्टेतदुपशम प्रकारंच देवब्राह्मणद्रव्यापहारीपांडुरोगवान्भवतिस कृछ्रातिकृछ्रचांद्रायणानिकुर्यात् कूष्मांडहोमंचकु- र्यात्हिरण्यंदद्यात् अपरंचशौनकोक्तं अंत्यजागम नेमर्त्यःपांडुरोगीप्रजायते वक्ष्यामितत्प्रतीकारंदानहो मादिकर्मणा पलेनैकेनकुर्वीतरजतेनवसुंधरा तदर्धे नाथवाकुर्याद्वित्तशाठ्यंनकारयेत् सपर्वतवनांकृत्वास

मुद्रपरिवेष्टितां नवरत्नानिनिक्षिप्यश्वेतवस्त्रेणवेष्ट
येत् कांस्यपात्रेविनिःक्षिप्यपलाष्टकविनिर्मितं देवी
मावाहयेत्तत्रभूतधात्रींहरिप्रियां एह्येहिवसुधेदेविक
पेस्मिन्सम्यगाविश सहितांपर्वतैर्वृक्षैःस्कमनोभिर्मनो
हरैः एवमावाह्यतांदेवींगंधमाल्यैःसमर्चयेत् उपचारैः
षोडशभिराचार्यः सर्वशास्त्रवित् होमंचापिप्रकुर्वीतस
मिदाज्यतिलैःसह भूमिर्भूमीनिमंत्रेणसामिद्धोमंप्रकल्प
येत् मंत्रःप्रकीर्तितश्चाग्नौतिलाज्याहुतिभिर्हुनेत् अ
नेनतुततश्चात्रकुंभंवस्त्रेणवेष्टितं स्थापयेदव्रणंशुभ्र
मश्वत्थानादिमृत्तिका प्रक्षिपेच्चततःशद्धंवारिणापरि
पूरयेत् पावमान्यादिभिर्मंत्रैरभिषेकंचकारयेत् शन्नो
देव्यनुवाक्येनशांतिंचापिप्रकल्पयेत् अभिषिक्तस्य-
चांगानिवस्त्रेणपरिमार्ज्जयेत् अक्षीभ्यांमनुवाक्येन
यथालिंगंसदर्भकं आचार्यायतुतांपृथ्वींदद्याद्रोगीस
माहितः मंत्रेणानेनविधिवत्प्राङ्मुखवाप्युदङ्मुखः धा
त्रींधरित्रीभूतानांवराहेणोद्धृतापुरा रत्नगर्भासमुद्रे-
कवसनासर्वशोभना दानेनानेनसुप्रीतापांडुरोगव्य
पोहतु दानमंत्रः अनेनविधिनादद्यात्पृथ्वीदानंप्रय
त्नतः तत्रजातंतुवैकृत्यमर्त्यजागमनेनतु तत्सर्वनाश
मायातुपांडुरोगादिकंमहत् शांत्यर्थंब्राह्मणैःसार्द्धंकु
र्यात्पुण्याहवाचनं इतिपांडुरोगहरः पृथ्वीदानविधिः

अथकामलारोगोज्योतिःशास्त्राभिप्रायेणाभिव्यज्य
ते यदुक्तंजातके दुःखान्विशिरोरोगंकामलावात-
विभ्रमः शरीरेक्लेशमाप्नोतिशशांकेशक्रमध्यगे शक
क्रदशांततःपतितचंद्रजनितकामलारोगोपशांतयेप्रागु
क्तं चंद्रजपहोमपूजादानस्नानविधानंविदध्यात्
अथकामलारोगस्यप्रतीकारंकर्मविपाकाभिप्रायेणा
ह यथाहवृद्धगौतमः कामलीभक्तचोरंस्याद्वक्ष्यामि
तस्यनिष्कृतिं कुर्याच्चपक्षिराजंतुविष्णोर्वाहनमुत्तमं
सुवर्णेनातिशक्तेनपक्षयोर्मौक्तिकद्वयं नासिकायां
तथावज्रमुत्तरीयंचराजतं एवंकृत्वागरुत्मंतंघृतद्रो-
णोपरिन्यसेत् श्वेतवस्त्रेणसंवेष्ट्यश्वेतमाल्यैःसम
र्चयेत् सर्वशास्त्रार्थतत्वज्ञोवैष्णवोधर्मतत्परः ब्रा-
ह्मणस्त्वर्चितोभक्त्यायजमानेनशक्तितः उपचारैः
षोडशभिःद्विजमभ्यर्चयेत्तदा आग्नेय्यांदिशिहोमश्च
कर्तव्यस्थंडिलेशुभे समिदाज्यतिलैस्तत्रपालाशस-
मिधोपिच मंत्रोगरुडगायत्रीमदिदाज्येनकीर्तितात्
तिलहोमोष्टाहुतिभिः कार्यस्विष्टकृतंजपेत् पक्षि
राजायविद्महेस्वर्णपक्षायधीमहितन्नोगरुडःप्रचो
दयात् इतिगरुडंगायत्री स्थापयेदव्रणंकुंभंसित
वस्त्रेणवेष्टितं क्षिपेत्तत्रचरत्नानिमृत्तिकापंचरोच
नं अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात्

पंचत्वकृमल्लुबान् कृत्वापूरयेत्तीर्थवारिणा तेनाभिषे
कंकुर्वीतआपोहिष्ठादिभिः क्रमात् हिरण्यवर्णमित्यृ
चापठमानेनवैवहि ततःस्नात्वासुचीरोगीविष्णोर्वा
हनमुत्तमं सदक्षिणंमुदायुक्तःप्राङ्मुखायनिवेदयेत् मं
त्रेणानेनविधिवदाचार्यायाप्युदङ्मुखः श्रीकृष्णपरमा
नंदजगतःपरिपालक पूर्वजन्मनियत्पापंभक्तत्वोर्यस
याकृतं तेनावाप्तंहिवैरूप्यंयन्मयात्यातिदुःसहं काम
लोत्थमिदंदेवनववाहनदानतः विनाशयाशुमेकृष्णज
गतांपालकोत्यसि दानमंत्रः एवंगरुडदानंचकृत्वाम-
र्त्यःसुखीभवेत् आचार्यंभोजयित्वाच प्राणिपत्यविसर्ज
येत् इतिकामलाहरणगरुडदानविधिः अथक्र
मप्राप्तस्यपांडुरोगकामलाहलीमकादीनांनिदानंचिकि
त्सितमाह रुग्विनिश्चयात् पांडुरोगाः स्मृताः पंचवा
तपित्तकफैस्त्रयः चतुर्थःसंन्निपातेन पंचमोभक्षणान्मृदः
व्यवायमम्लंलवणा निमद्यंमृदंदिवास्वप्नमतीव
तीक्ष्णंनिषेव्यमानस्यविदूष्यरक्तंकुर्वंतिदोषास्त्वचिपां
डुभावं त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणंप्रेक्षण
कूटशोथाः विण्मूत्रपीतत्वमथाविपाकोभविष्यतस्त
स्यपुरस्सराणि पांडुदंतनखोयस्तुपांडुनेत्रश्चयोभवे
त् पांडुसंघातदर्शीचपांडुरोगीविनश्यति अंतेषुशूनं
परिहीनमध्यंम्लानंतथांतेषुचमध्यशूनं गुदेपिशेफ

स्यथमुष्कायोऽश्वशून्यंप्रताम्यंतमसंज्ञकल्पं विवर्ज्जये त्पांडुकिनंयं शोर्थीतथातिसारज्वरपीडितंच वृंदसंग्र हात् फलत्रिकामृतावासातिक्ताभूनिंबनिंबजः क्वाथः क्षौद्रयुतोहन्यात्पांडुरोगंसकामलं पुनर्न्नवानिंबपटोल सुंठीतिक्तामृतादार्व्यभयाकषायः सर्वंगशोफोदर काशशूलश्वासान्वितंपांडुगदंनिहंति मंडूरलोहाग्नि विडंगपथ्याव्योषांशकः सर्वसमानतःस्यात् मूत्रान्वि तोयंमधुनावलेहः पांड्वामयंहंत्यचिरेणघोरं लोहपात्र स्थितंक्षीरंसप्ताहंपथ्यभोजनः॥ पिबेत्पांड्वामयीशोषीग्रहणी दोषपीडितः सप्तरात्रंगवांमूत्रभावितंचाप्ययोरजः पां डुरोगोपशांत्यर्थंपयसाप्रपिबेन्नरः त्रिफलायागुडूच्या वादार्व्यानिंबस्यवारसः प्रातर्मधुयुतंचैवकामलार्तःपि बेन्नरः त्रिफलाद्वेहरिद्रेचकटुरोहिण्ययोरजः चूर्णितंम धुसर्पिर्भ्यांलेहयेत्कामलापहं धात्रीलोहरजोव्योषनि शाक्षौद्राज्यशर्कराः लेहोनिवारयत्याशुकामलामुद्ध तामपि अंजनंकामलार्त्तानांद्रोणपुष्पीरसंशुभं नि शागैरिकधात्रीणांचूर्णंवासंप्रकल्पयेत् नस्यंकर्कोट मूलस्यदेयंवाजालिनीफलं दग्ध्वाक्षकाष्ठैर्मलमाय संतुगोमूत्रनिर्वापितंसप्तवारं विचूर्ण्यलीढंमधुनाचिरे णकुंभाह्वयंपांडुगदंनिहन्यात् मंडूरस्यचशुद्धस्यतु लाद्वंपरिकीर्त्तितं तद्वल्लोहस्यपत्राणिनिर्लोत्सेधप्रमाण

तः पुराणगुडपंचाशत्कोलप्रस्थत्रयंतथा निकुंभचित्र
काभ्यांचपलेद्वेद्वेसुचूर्णिते पिप्पलीनांविडंगानांकुड
वंचपृथक्पृथक् त्रीण्यपित्रिफलाप्रस्थान्जलद्रोणे
समावपेत् अर्द्धमासस्थितोधान्येऐयोरिष्टप्रमाणतः
दोषानुभयतःभाव्यपांडुरोगंनियच्छति कृमीनर्शांसिकु
ष्ठंचकासश्वासकफामयान् एकोरिष्टस्तुमांडूरःसर्व
पांड्वामयापहः त्र्यूषणंत्रिफलामुस्तंविडंगंचव्यचित्रकौ
दार्वीत्वङ्माक्षिकोधातुर्ग्रंथिकंदेवदारुच ऐषांद्विप
लिकान्भागान्चूर्णंकृत्वापृथक्पृथक् मंडूरंद्विगुणं
चूर्णंशिष्टमंजनसंनिभं मूत्रेचाष्टगुणेपक्त्वातस्मिंस्तु
प्रक्षिपेत्ततः उदुंबरसमान्कुर्यात्वटकस्तान्यथाग्निना
उपयुंजीत तक्रेणसाम्येजीर्णेचभोजने मंडूरवटकाह्ये
तेप्राणदाःपांडुरोगिणां कुष्ठानिजठरंशोथमूरूस्तंभ
कफामयान् अर्शांसिकामलान्मेहान्यक्ष्माणंनाशयं
त्यपि यवगोधूमशालीनांरसैर्जांगलजैःशुभैः मुद्गा
ढकीमसूराद्यैःप्राग्भोजनमिष्यते इतिश्रीतोमरवं
शावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचितेवी-
रसिंहावलोकेज्योतिशास्त्रकर्मविपाकायुर्वेदोक्तक्रम
करेणपांडुरोगकामलाहलीमककुंभकामलादिरोगप्र-
योगाधिकारः अथक्रमप्राप्तस्यरक्तपित्तस्यज्योतिः
शास्त्राभिप्रायेणप्रकारमाह चंद्रक्षेत्रेयदाभौमोजाय

तेमनुज स्तदा रक्तपित्तेनदीनांगोनानाव्याधिसमाकु
लः अपरंच रक्तपित्तज्वरंदाहमग्निचौरैरुपद्रुतं ल
भतेनात्रसंदेहश्चंद्रमध्येयदाकुजः चंद्रसंयोगिकुजज
नितबाधोपशांतयेलक्ष्मीतयेजपहोमदानादिकविधिमाह
अग्निर्मूर्द्धेतिमंत्रेणजपः तिलाज्यखदिरसमिद्भिर्होमः
रक्तवृषभदानं स्नानंच यथाहश्रीपतिः बिल्वचंदन
बलारुणपुष्पैर्हिंगलूफलिनीवकुलैश्चस्नानमद्भिरिहसां
सिसुनाभिर्भौमदोषविनिवारणमाहुः विद्रुमं चपरिद
द्यात् हविष्यंनैवेद्यं अथकर्मविपाकाभिप्रायेणरक्त
पित्तप्रतीकारमाह यःपूर्वजन्मनिवैद्यशास्त्रमदात्वयु
क्तौषधमयथाकृत्वाप्रयोजयतिसशोणितपित्तव्याधिमा
न्भवति सोग्निदूतंवृणीमहइत्यादिचरुघृताभ्यामष्टो
त्तराश्रुतमग्नौजुहुयात्रक्तपित्तापनुत्तयेइतिगरुडपुरा
णाभिधानात् अथक्रमप्राप्तस्यरक्तपित्तस्यसनिदा
नंचिकित्सितमाह रुग्विविनिश्चयात् घर्मव्यायाम
शोकाध्वव्यवायैरतिसेवितैः तीक्ष्णोष्णक्षारलवणैर
म्लैःकटुभिरेवच पित्तंविदग्धंस्वगुणैर्विदहत्याशुशो
णितं ततःप्रवर्त्ततेरक्तमूर्द्ध्वंचाधोद्विधापिवा ऊर्द्ध्वंकर्णा
क्षिनाशास्यैर्मेढ्रयोनिगुदैरधः कुपितंरोमकूपैश्चसमस्तै
स्तत्प्रवर्त्तते सदनंशीतकामित्वंकंठधूमायनंवमिः लो
हगंधिश्चनिश्वासोभवंत्यस्मिन्भविष्यति एकमार्गंबल

वतोनातिवेगंनवोस्थितं रक्तपित्तंसुखेकालेसाध्यंस्या न्निरुपद्रवं एकदोषानुगंसाध्यंद्विदोषंयाप्यमुच्यते त्रि दोषजमसाध्यंस्यात्मंदाग्नेरतिवेगवत् दौर्बल्यंश्वास- कासज्वरवमथुमदापांडुतादाहमूर्छाभुक्तेघोरोविदाह स्त्वधृतिरपिसदाहृद्यतुल्याचपीडा तृष्णाकोष्टस्यभेदः शिरसिचतपनंपूतिनिष्टीवनत्वंभक्तद्वेषाविपाकोविकृति रपिभवेद्रक्तपित्तोपसर्गाः मांसप्रक्षालनाभंक्कथितमिव चयत्कर्दमांभोनिभंवामेदःपूयास्रकल्पंयकृदिवयद्वि- वापक्वजंबूफलाभं यत्कृष्णंयच्चनीलंभृशमतिकुणपं यत्रचोक्ताविकारास्तद्वर्ज्यंरक्तपित्तंसुरपतिधनुषायच्च तुल्यंविभाति यथाहसुश्रुताचार्यः नादौसंग्राह्यमुद्रि क्तंयदसृग्बलिनंततः तत्पांडुग्रहणीकुष्टप्लीहगुल्मज्व रावहं अधःप्रवृत्तंवमनैरूर्द्ध्वभागंविरेचनैः जयेदन्य तरद्वापिक्षीणस्यशमनैरसृक् अतिप्रवृत्तदोषस्यपूर्व लोहितपित्तिनः अक्षीणबलमांसाग्नेःकर्तव्यमपतर्पणं लंघितस्यततोयुक्त्यालघ्वन्नमवचारयेत् पाचनंतर्पणं- लेहान्सर्पींषिविविधानिच द्राक्षामधुककाश्मर्यसिता युक्तंविरेचनं यष्टीमधुकयुक्तंचसक्षौद्रंवमनंहितं पयां सिशीतानिरसाश्चजांगलाःसती नयूषाश्चसशालिष- ष्ठिकाः पटोलसेल्हंस्कनिषन्नयूथिकावटांतिमुक्तांकुर सिंदुवारजं हितंचशाकंघृतसंस्कृतंयदातथैवधात्रीफ

लदाडिमान्वितं रसाश्च पारावतशंखकूर्मजास्तथाय
वाग्वोभिहिताघृतोत्तराः वृंदसंग्रहात् आटरूष
कमृद्वीकापथ्याक्वाथः सशर्करः मधुमिश्रः श्वास-
कासरक्तपित्तनिवारणः नीलोत्पलंशर्करान्वपद्मकंप
द्मकेशरं तंदुलोदकसंयुक्तंप्रशस्तंरक्तपित्तिनां वृषस्य
स्वरसंकृत्वाद्रव्यैरेभिश्चयोजयेत् प्रियंगुमृद्विकारो
ध्रमंजनंवाविचूर्णयेत् तच्चूर्णंयोजयेत्तत्ररसक्षौद्रस
मन्वितं नाशिकामुखपायुभ्यांयोनेर्मेढ्राच्चयोषितां प्र
श्रवद्रक्तपित्तास्रंस्थापयेदेषयोगराट् यद्यशस्त्रक्षतं
रक्तंनतिष्टेद्धि वृतंपुनः तदप्यनेनयोगेननिष्ठत्या-
श्ववचूर्णितं घ्राणस्रुतेसृजिप्रोक्तंयोषित्क्षीरेणना
वनं नस्यंदाडिमपुष्पोत्थरसोदूर्वारसोथवा रसोदाडि
मपुष्पस्यदूर्वारससमन्वितः अलक्तकरसोपेतःपथ्या
रससमन्वितः योजतोनस्यतःक्षिप्रंत्रिदोषमपिदेहि
नां नासारक्तंप्रवृत्तंतु हन्यादितिकिमद्भुतं वासायां
विद्यमानायामाशायांजीवितस्यच रक्तपित्तीक्षयी-
कासीकिमर्थमवसीदति पक्वोदुंबरकाश्मर्यपथ्या
खर्जूरगोस्तनी मधुनाघ्नंतिसंलीढारक्तपित्तंपृथकृपृ
थकूदूर्वासोत्पलकिंजल्कमंजिष्टासैलवालुकाः मूर्वारो
ध्रमुशीराणिमुस्तचंदनपद्मकं द्राक्षामधुकपथ्याक्षा
क्षीरंचंदनंसितं पिष्टेस्तैःकार्षिकैर्द्रव्यैघृतप्रस्थंविपा

चयेत् अजाक्षीरंतंडुलांबुपृथग्दत्वाचतुर्गुणं तस्यानंद
मतांरक्तंनावनंनाशिकागते कर्णाभ्यांयस्यगछेत्तुतस्य
कर्णौप्रपूरयेत् चक्षुर्गतेचरक्तेचपूरयेतेनचक्षुषी मेढ्रपा
युगतेचापिसर्वकर्मसुयोजयेत् प्रवृत्तंरोमकूपेभ्यस्त्वभ्यं
गेनजयेद्धृतं इतिदूर्वाद्यंघृतं घ्राणप्रवृत्तेजलमाशुदेयंस
शर्करंनाशिकयापयोवा द्राक्षारसंक्षीरघृतंपिबेद्वा
सशर्करंचेक्षुरसंपयोवा कूष्मांडकात्पलशतंसुखिन्नं
निःकुलीकृतं पचेत्तमेघृतप्रस्थेपात्रेताम्रमयेदृढे यदा
मधुनिभःपाकस्तदाखंडशतंक्षिपेत् पिप्पलीशृंगबेरा
भ्यांद्वेपलेजीरकस्यच त्वगेलापत्रमरिचंधान्यकानां
पलार्द्धिकं न्यसेच्चूर्णीकृतंतत्रदर्व्यातद्घट्टयेत्ततः त
त्पक्वंस्थापयेद्भांडेक्षौद्रंदत्वाघृतार्द्धकं तद्यथाग्निबलं
खादेद्रक्तपित्तीक्षतीक्षयी श्वासकासतमश्छर्दितृष्णा-
ज्वरनिपीडितः वृष्यंपुनर्नवकरंबलवर्णप्रसादनं उ
रःसंधानकरणंबृंहणंस्वरबोधनं अश्विभ्यांनिर्मितं-
सिद्धंकूष्मांडकरसायनं रक्तपित्तेकूष्मांडकावलेहः लो
हितंछर्दयेद्यस्तुवहुशोलोहितेक्षणः लोहितोद्गारदर्शी
चम्रियतेरक्तपैत्तिकः इतिश्रीतोमरवंशावतंसरिपु
भूतभैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलो
केज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगोरक्तपित्ताधि
कारः अथक्रमप्राप्तस्यक्षयरोगस्यज्योतिःशास्त्रा

भिप्रायेणप्रकारमाह तत्प्रतीकारंच यदुक्तंजातकेकु
ष्ठकंडुविकारैश्चक्षयरोगभगंदरैः गजादिवाहनभयंभ
वेच्चंद्रगतेबुधे अन्यच्च चंद्रक्षेत्रेयदाचांद्रिर्जायतेयस्य
जन्मनि सजातःक्षयरोगीस्यात्कुष्ठादिभिरुपद्रुतः इ
तिवचनात् चंद्रसंयोगिबुधजनितबाधोपशांतयेपूर्वो
क्तंजपहोमादिकंकुर्यात् तेनोपशाम्यति व्याधिनाश
स्येतुवित्तशाठ्यंनकुर्वीतसतिविभवे अथक्षयरोगस्य
कर्मविपाकाभिप्रायेणप्रयोगंप्रतीकारंचदर्शयति य
थापूर्वजन्मनिसाक्षाद्ब्रह्महाक्षयरोगवान्भवति अस्य
प्रायश्चित्तं असाध्यरोगोपसृष्टंषडब्दंव्रतमाचरेत्
रोगतारतम्याभावात् प्रायश्चित्तभावोद्रष्टव्यः तथा
मांसलोलुपःपरवस्तूचस्वाभिलाषीपरविषयभोगान
सहमानः स्वामीहत्वावाक्षयरोगी तत्रचयवमध्यपि-
पीलिकामध्यानिचत्रीणिचांद्रायणान्याचरेत् कृछाद्य
शक्तस्यधनिनः अशीत्युत्तरशतंनिष्कानांदानं अत्रा
प्यशक्तस्यतदर्द्धं तत्राप्यशक्तस्यतदर्द्धं सत्प्रतनो-
ल्पेनकुर्यात् हीनकल्पंनकुर्वीतसतिद्रव्येफलप्रदमि
तिवचनात् अत्राप्यशक्तस्यचांद्रायणंकुर्यात् प्रतिदि
नंचचतुर्विंशतिब्राह्मणभोजनंकारयेत् अत्राप्येतदहु
त्वेनसुचामित्येत्यनेनसूक्तेनप्रत्यृचंचरुघृताभ्यांहोमंकु
र्यात् जुहुयादष्टोत्तरशतमिति अनुक्तसंख्यायत्रस्या

ष्ठनमष्टोत्तरंस्मृतंइतिवचनात् रोगभूयस्त्वापेक्षयाअ
युतसंख्योजपहोमश्चभवति तथाचोक्तंअसाध्यव्या-
धिनाग्रस्तउग्रेणप्राणहारिणा आतेरौद्रेणसूक्तेनप्रत्यृ
चंवाग्यतः शुचिःपूर्वंमीत्साहुतीर्हुत्वाउपस्थायच्चशंकरं
हविःशेषेणवर्त्तनएकोत्तरशतंततः पूर्णमासेजपेन्मृत्युरो
गेभ्यश्चप्रमुच्यते होमकर्मण्यशक्तानांजपस्ताद्द्विगुणो-
भवेत् पद्मपुराणेक्षयेकारणांतरमाह क्षयीस्यात्क्षे
त्रहरणादितिक्रियांतरमाह बौद्धायनः कारयेत्कदलीं
दिव्यांपर्णैःसर्वैश्चसंयुतां फलपूगेनसंयुक्तां सुवर्णस्य
फलेनतु यथाविभवतःकुर्याद्रूप्येणावेष्ट्यसूत्रकैः ब्रा
ह्मणान्भोजयेच्चापिभक्ष्यैर्नानाविधैस्तथा होमंचकारये-
त्तत्रपूर्वंवद्ब्राह्मणेनच हिरण्यगर्भइत्यादिभिर्लिंगैः प्राक्त
नेनतु तस्मैतांकदलींदद्याद्रूप्यालंकारपूर्विकां पूजिता
यदरिद्रायदांतस्यायात्मवेदिने धर्मज्ञायातिदांतायमं
त्रेणानेनतांक्षयी हिरण्यगर्भपुरुषपरात्परजगन्मय
रंभादानेनभोदेवक्षयंक्षपयमेप्रभो दानमंत्रः पुण्याह
वाचनंकार्यंब्राह्मणैर्वेदपारगैः शिष्टैरिष्टैर्बंधुभिश्चस
हभोजनमाचरेत् अथराजयक्ष्माणि यःपुनर्मद
गर्वाभ्यांवृथाभिमानीधर्मशास्त्रज्ञानीसभायांप्राय-
श्चित्तव्यवहारंकरोतिसराजयक्ष्मीभवति प्रतिरूपंद
द्यात् तदुक्तंब्रह्मांडपुराणेधर्मशास्त्रानभिज्ञोयः प्रा

यश्चित्तंददातिवै राजयक्ष्माभवेत्तस्यरोगःपीडाति दारुणा पूर्वोक्तेनविधानेनप्रदद्यात्प्रतिरूपक मिति राजयक्ष्मणि असाध्यरोगक्षयार्थंव्याधिप्रतिरूपदानंवाकुर्यात् तदुक्तंब्रह्मांडपुराणे ब्रह्मोवाच सुवर्णरत्नरजतैर्यथाशक्त्यानुरूपतः कृत्वाचप्रतिमांव्याधेर्दद्याद्द्विप्राययत्नतः शतेनवातदर्द्धेनत्रिंशतानिष्कसंख्यया जातरूपमयंव्याधिंप्रतिरूपंतुकारयेत् निधायपात्रेसंपूर्णेतंदुलैःशतरूपकैः अलंकृत्यचसौवर्णैरूपंचागुरुलेपनैः वासोयुगेनसंवेष्ट्याहिरण्यवहुभूषणैः अलंकृतायविप्रायदद्यान्मंत्रमुदीरयेत् येमांरोगाःप्रबाधंतेदेहस्थाःसततंततः गृण्हीष्वप्रतिरूपेण तान्रोगान्द्विजसत्तम वाढमित्येवतद्रूपंगृण्हीयाद्व्याधिभिःसह ततःसरोगीदाताचदीर्घायुष्त्वंप्रपद्यते यद्यपिपात्रइतिसामान्येनाभिहितंतथापिकांस्यमयंविज्ञातव्यंकांस्यंचयक्ष्मणेदेयमितिवचनात् अत्रप्रतिगृहीतमुखंनावलोकयेत् यदुक्तं दुष्प्रतिग्रहदग्धस्य विप्रस्यकिलभारत नपश्येद्वदनंपश्चान्नचैनमभिभाषयेत् इतिमहाभारतवचनात् इतिसर्वव्याधिप्रतिरूपदानविधिः उरःक्षतस्यापिक्षयरोगांतःपातित्वात् व्याधिगुरुलघुभावेनक्षयरोगोक्तमेवकार्यं तद्भूतस्वरभेदस्यापि अथक्रमप्राप्तस्योरः क्षतस्यक्षयरो

गस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् वेग
रोधात्क्षयाच्चैवसाहसाद्विषमाशनात् त्रिदोषोजायतेय
क्ष्मागदोहेतुचतुष्टयात् कफप्रधानैर्दोषैस्तुरुद्धेषुरस-
वर्त्मसु अतिव्यवायिनोवापिक्षीणेरेतस्यनंतराः क्षीयं
तेधातवःसर्वेततःशुष्यतिमानवः श्वासांगसादकफ-
संस्रवतालुशोषछर्द्यग्निसादमदपीनसकासनिद्राशो
षेभविष्यतिभवंतिसचापिजंतुः शुक्लेक्षणोभवतिमां
सपरोरिरंसुः स्वप्नेषुकाकशुकशल्लकनीलकंठगृध्रास्त
थैवकपयःकृकलासकाश्च तंवाहयंतिसनदीर्विजला
श्चपश्येच्छुष्कांस्तरूनपवनधूमदवार्दितांश्च अंशपार्श्वा
भितापश्चसंतापःकरपादयोःज्वरःसर्वांगगश्चेतिलक्ष
णंराजयक्ष्मणः स्वरभेदोनिलाच्छूलंसंकोचश्चांशपा
र्श्वयोःज्वरोदाहोतिसारश्चपित्ताद्रक्तस्यचागमःशिरसःप
रिपूर्णत्वमभक्तच्छंद एवचकासः कंठस्यचोध्वंसोविज्ञे
यःकफकोपतःएकादशभिरेभिर्वाषड्भिर्वापिसमन्वितं
कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैःत्रिभिर्वापी
डितंलिंगैःज्वरकासासृगामयैःजह्याच्छोषार्दितंजंतु
मिच्छन्सुविमलंयशःसर्वैरर्द्धैस्त्रिभिर्वापिलिंगैर्मांसबलक्ष
यैःयुक्तोवर्ज्यश्चिकित्स्यस्तुसर्वरूपोप्यतोन्यथा महा
शनंक्षीयमाणमतीसारनिपीडितं सूनमुष्कोदरंचैव
यक्ष्मिणंपरिवर्जयेत् परंदिनसहस्रंतुयदिजीवतिमा

नवः स्रुभिषग्भिरुपक्रांतस्तरुणः शोषपीडितः व्य
वायशोषी शुक्रस्यक्षयलिंगैरुपद्रुतः पांडुदेहोयथा
पूर्वक्षीयंतेचास्यधातवः युद्धमानस्यबलिभिःपति
तोविषमोन्नतः वृषंहयंवाधावंतंदम्यंचान्यंनिगृह्णतः
महानदीं वातरतोहयैर्वासहधातवः तथान्यैः कर्मभिः
क्रूरैः भृशमभ्याहितस्यच विक्षतेवक्षसिव्याधिर्बल
वान्समुदीयते मर्पाड्यतेततःपार्श्वेशुष्यत्यंगंप्रवेपते
क्रमाद्वीर्यंबलंवर्णोरुचिरग्निश्चहीयते शिरोरुक्
शोणितच्छर्दिकासोवैशेषिकः क्षते क्षीणेसरक्तमूत्रत्वंपा
र्श्वपृष्ठकटिग्रहः अल्पलिंगस्यदीप्ताग्नेःसाध्योबलव
तोनवः अथवृंदसंग्रहात् शालिषष्टिकगोधूमयव
मुद्गादयः शुभाः मद्यानिजांगलाःपक्षिमृगाः शस्ताः
विशुष्यतःसपिप्पलीकंसयवंसकुलत्थंसनागरं दाडि
मामलकोपेतंस्निग्धमाजं रसंपिबेत् तेनषड्विनिवर्तं
तेविकारापीनसादयः द्रव्यतोद्विगुणंमांसंसर्वतोष्ट
गुणंजलं पादस्थंसंस्कृतंचाज्यंषडंगोयूषउच्यते धा
न्याकपिप्पलीविश्वदशमूलीजलंपिबेत् पार्श्वशूलः
श्वासकासपीनसादिनिवृत्तये अश्वगंधामृताभीरुद
शमूलीबलावृषः पुष्करातिविषेघ्नंतिक्षयंक्षीररसायनः
अथसश्रुतात् घृतेनचाज्येनसमाक्षिकेन तुरंगगं
धातिलमाषचूर्णं सिताश्वगंधामगधोद्भवानांकल्कं

घृतक्षौद्रयुतंप्रलिह्यात् क्षीरंपिबे द्वाप्यथवाजिगं
धाविपक्कमेवंलभतेंगपुष्टिं तदुत्थितंक्षीरघृतंसिताढ्यं
प्रातःपिबेद्वापिपयोनुपानं उत्सादनेचापितुरंगगंधा
योज्यायवाश्चैवपुनर्नवाच कृत्वैवंपतत्कुसमेश्चसि
द्धंसर्पिः पिबेत्क्षौद्रयुतंहिताशी यक्ष्माणमेनत्स्वरदलंच
कासंश्वासंचहन्यादपिपांडुतांच सक्कृद्रसेगोश्वगः
जाव्यजानांक्काथःसिताश्चापितथैवभागेः मुर्वाहरिद्रा
खदिरद्रुमाणांक्षीरस्यभागस्त्वपरोघृतस्य भागंद
शैतांविपचेद्विधिज्ञोदत्वात्रिवर्गंमधुरंचकृत्स्नं कटु
त्रिकंचैवसभद्रदारुघृतोत्तमंयक्ष्माणिवारणायहिंपं
चमूलंवरुणंकरंजं भल्लातकंबिल्वपुनर्नवेच यवान्कु
लत्थान्बदराणिभार्गीपाठंहुताशंसमहीकदंबं कृ
त्वाकषायंविपचेद्धितस्यषड्भिश्चपात्रैर्घृतपात्रमेकं
व्योषंमहावृक्षपयोभयाक्षवव्यंस्करभ्यांलवणोत्तमं
च एतद्धिशोथंजठराणिचैवहन्यात्स्रमेहांश्चमहानि
लेनगोश्वाव्यमेभैणखरोष्ट्रजातैः सकृद्रसक्षीररस
क्षतोत्थैः द्राक्षाश्वगंधामगधासिताभिःसिद्धंघृतंय
क्ष्मविकारहारि एलाजमोदामलकाभयाक्षगाय-
त्र्यरिष्टासनशालसाराः विडंगभल्लातकचित्रचोग्रा-
कटुत्रिकांभोदसुराष्ट्रजाश्च पक्काजलेतेनपचेच्चस
र्पिरस्मिन्सुसिद्धेत्ववतारितेच त्रिंशत्पलान्यत्रसितो

पलायादद्यात्तुगायाश्चपलानिषट्चप्रस्थेघृतस्याद्दिगु
णंचदद्यात्क्षौद्रंततोमंथहृतंविदध्यात् पलंपलंप्रातरतः
प्रलिह्यात्पश्चात्पिवेत्क्षीरमतंद्रितश्च एतद्धिमेध्यंपर-
मंपवित्रंचक्षुष्यमायुष्यमथोयशस्यं यक्ष्माणमाशव्य
पहंतिचैवपांड्वामयंचैवभगंदरंच श्वासंचहंतिस्वरभेदकां
सत्हृत्प्लीहगुल्मग्रहणीगदांश्चनचात्रकिंचित्परिवर्जनीयं
रसायनंचैतदुपास्यमानं प्लीहोदरोक्तंविहितंचसर्पि-
स्त्रीण्येवचान्यानिहितानिहिचात्रउपद्रवांश्चस्वरभेदकृतं
द्वीक्षयेद्यथास्वंप्रसमीक्ष्यशास्त्रं अजासकृन्मूत्रपयो
घृतासृङ्भ्रासालयानिप्रतिसेवमानः स्नानादिनानावि
धिनाजहातिमासादशेषंनियमेनशोषंरसोनयोगंविधि
वत्क्षयार्तः क्षीरेणवानागवलाप्रयोगं सेवेतवामागधि
काविधानंतथैवयोगंजतुनोश्मजास्यास्त्रियोरतिंक्रो
धमसूयतांवत्यजेदुदारान्विषयान्भजेत वैद्यान्द्विजा
तींस्त्रिदशान्गुरूंश्चवाचश्चपुण्याःशृणुयाद्द्विजेभ्यः
शस्यतेगुल्मशूलेचस्वासेकासेक्षयेज्वरेकर्पूरमहिफे
नंचकस्तूरीजातिपत्रकानागवल्लीरसेनैवगुटिकामेहना
शिनीवलप्रमाणंतांभक्षतृततःपीत्वाशितापयः नरश्च
टकवतगच्छेच्छतदाराश्चद्रावयेत् जीवकर्षभकौवीरा
जीवंतीनागरंसटीपर्ण्यश्चतस्त्रोमेदेद्वेकाकोल्यौद्वेनि
दिग्धिकेपुनर्नवेद्वेमधुकात्मगुप्ताशतावरी ऋद्धीप

रूषकंभार्गीमृद्वीकाबृहतीतथा शृंगाटकीलामलकीव
यस्थापिप्पलीबला बदराक्षोडखर्ज्जूरवादामाम्यूषका
नि फलानिचैवमन्यानिकल्कीकुर्वीतकार्षिकैः धात्री
रसंविदारीक्षुछागमांसरसंपयः दत्वाप्रस्थोन्मितान्
भागान् घृतप्रस्थंविपाचयेत् प्रस्थार्द्धमधुनः शीतेशर्क
रार्द्धतुलांतथा पलार्द्धकंचमरिचंत्वगेलापत्रकेसरं वि
नीयचूर्णितंतस्मात्लिह्यान्मात्रांसदानरः अमृतप्रा
शमित्येतन्नराणाममृतंयथा सुधामृतरसंप्रस्थंक्षी
रमांसरसाशिनं स्त्रीप्रशक्तान्कृशान्वर्णस्वरहीनां-
श्चबृंहयेत् कासहिक्काज्वरश्वासतृष्णादाहास्त्रपि-
त्तनुत् पुत्रदंछर्दिमूर्छाघ्नंयोनिमूत्रामयापहं क्षतक्षी
णेअमृतप्राशोवलेहः चिकित्साकलिकातः त्री-
न्वारान्प्रथमंशिलाजतुजले भाव्यंभवेत्रैफलेत्रिः क्वा
थेदशमूलजेतदनुवाछिन्नोद्भवायाः रसेवाव्यालक्वथ
नेपटोलसलिलेयष्टीकषायेसुतं गोमूत्रेणतथापयस्य
थगवामेषांकषायेनतः द्राक्षाभीरुविदारिकाह्वय
पृथक्पर्णीस्थिरापौष्करैः पाठाकौटजकर्कटाक्षकटु
कारास्नांबुदालंबुसैः दंतीचित्रकचव्यवारणकणावीरा
ष्टवर्गौषधैर्द्रोणेभश्चरणास्थितेपलमितैरेभिःशृतेर्भाव
येत् धात्रीमेषविषाणिकात्रिकटुकैरेभिःपृथक्पंचभि
र्द्रव्यैश्चद्विपलोन्मितैरपिपलंचूर्णाद्विदारीभवात् ताली

संकुडवंचतुष्पलमधुप्रक्षिप्यतेसर्प्पिषः तैलस्यद्विप
लंपलाष्टकमथक्षौद्रंभिषक्प्रयोजयेत् तुल्यंपलैःषोडश
भिः सितायास्त्वक्क्षीरिकापत्रककेशरैश्च विल्वांशकै
स्त्वक्त्रुटिसंप्रयुक्तैरित्यक्षमात्रागुटिकाप्रकल्प्या तासा
मेकतमांप्रयुज्यविधिवत्प्रातः पुमान्भोजयेत्प्राग्वामु
द्गद्लांबुजांगलरसंशीतंश्रृतंवाजलंमार्ध्वीकंमदिरा-
मगुर्वशनभुक्पीत्वापयोवागवांप्राप्नोत्यंगमनंगवत्सु-
भगतासंपन्नमानंदकृत् शोफग्रंथ्यवमंथवेपथुवमीपां
ड्वामयश्लीपदप्लीहार्शःप्रदरः प्रमेहपिडकामेहाश्मरीश
र्कराः हृद्रोगार्वुदवृद्धिविद्रधियकृद्योन्यामयान्सानिला
नूस्तम्भभगंदरज्वररुजस्तूनीप्रतूनीतृषः वातासृक्प्रव
लप्रवृद्धमुदरंकुष्टंकिलासंकृमीन्कासश्वाससमुरक्षतक्ष
यमसृक्पित्तंसपानात्ययं उन्मादंमदमप्यपस्मृतिम
निस्थौल्यंकृशत्वंतनोरालस्यंसहलीमकंचशमयेन्मू
त्रस्यकृच्छ्राणिच झटितिचजरयासर्वथैवैनरःकालजरा
क्रांतैर्वृतमल्लिकाकारैरेभिःशिरस्यशिरोरुहैः वलव-
द्भिर्लिंगमस्तातंकंवपुश्चसमुद्वहन् प्रभवतिशतंस्त्रीणां
गंतुंजनोजनवल्लभः स्तिमितमतिरप्यज्ञानांधःसद
स्यपटुःपुमान्सकृदपिपयाज्ञानोपेतःश्रुतिस्मृतिमा
न्भवेत् व्रजतिचयथायुक्तोयोगीशिवस्यसमीपतां
शिवगुटिकयाकस्तामेनांकरोतिनमानवः इतिशि

वगुटिका फलत्रिकक्काथविशद्धमादौस्फ्रुंगुडूच्या
दशमूलभुद्धं स्थिरादिकाकोलियुगादिसिद्धंशिलाज
तुस्याक्षयिषुप्रशस्तं तथाहचरकः हेमाद्याः सूर्यसं
तापाद्वंतिगिरिधातवः जत्वाभंमृदुमृत्स्नाभंनद्वंति
शिलाजतु संगीत्वामलकीफलत्रिकवलाछिन्नाविदारी
सटीजीवंतीदशमूलचंदनघनैर्नीलोत्पलैलावृषैः मृद्वी
काष्टकवर्गपुष्करयुतैःसार्द्धं समथ्यालिकैः षट् द्रोणेनशतानि
पंचविपचेद्धात्रीफलानामतः उद्धृत्यामलकानितैलघृत
योःषष्टिश्चषड्भिःपलैः भृष्टान्यर्द्धतुलांनिधायविधिवन्म
त्स्यंडिकायाःपचेत् शीतेषन्मधुनापलानिकुडवोवाश्यश्च
तुर्जातकंमुष्टिर्मागधिकापलद्वयमयंप्राशःस्मृतश्च्यावनः
नशोषः साफल्यंप्रजातिवपुषिक्षीयमाणेपिजंतोर्नमूर्छा
नोछर्दिस्तदपिचनचश्वासकासादयश्चनचालक्ष्मीर्विघ्नं
क्वचिदपिनव्यापदःसंभवंति प्रयोगादे तस्मान्मनसि
नवधियोविभ्रांतिमंतः प्रससंविरमप्रज्ञोपजशजडतांव्र
जेद्धिदपिपदनैवाकस्माद्वलीपलितानिच भवंतिनभयंतु
भ्यः कायेनवापदमासुयाच्च्यवनरचितप्राशंस्वादे दपत्स
शतंभवेत् इतिच्यवनप्राशः तंत्रांतरात् पिप्पलीरोध्रम
पाग
रिचंद्राधात्र्येलवालुकं चव्याचित्रकजंतुघ्नक्रमुकोसीरचं
दनैः मुस्ताप्रियंगुलवलीहरिद्रामिसिपेपलैः पत्रत्वकुष्टत
गरैर्नागकेशरसंयुतैः भागैःस्यादर्द्धपलिकैर्द्राक्षाषष्टिपलं

क्षिपेत् पलानिदशधातक्याःगुडस्यचशतत्रयंततोयमानाः
चतुःषष्टिर्भवत्येवस्करखावहं ग्रहणीपांडुरोगार्शःकार्श्यगु-
ल्मोदरापहः पिप्पल्यादिररिष्टोयंक्षयरोगविनाशनः य
क्ष्माणिपिप्पल्यरिष्टः मृद्वीकायाःशतार्द्धंतुद्विद्रोणेऽपांवि
पाचयेत् चतुर्थशेषेतस्मिंस्तुपूतशीतेप्रदापयेत् गुडस्य
द्विशतंदत्वातत्सर्वंघृतभाजने विडंगंफलिनीकृष्णात्वगेला
पत्रकेशरं मरिचान्तुतथाचूर्णंसम्यक्कृत्वाविचक्षणः क्षि
पेच्चपलिकैर्भागैर्घट्टनीयंसमंततः ततोयथाबलंपीत्वाका
सश्वासगलामयं हंतियक्ष्माणमत्युग्रमुरःसंधानकारकं
मृद्वीकासवइत्येषब्रह्मणाविहितःपुरा क्षयेमृद्वीकासवः
हारीतात् द्राक्षायाःसंम्मितंप्रस्थंमधुकस्यपलाष्टकंप-
चेत्तोयामृकेशद्धेयादशेषेणतेनच पालिकेमधुकद्राक्षेपि
ष्टेकृष्णापलद्वयंप्रदायसर्पिषःप्रस्थंचक्षीरंचतुर्गुणंसिद्धेशी
तेपलान्यष्टौशर्करायाश्चदापयेत् एतद्द्राक्षाघृतंनामक्षी
णक्षतस्करखावहं वातपित्तज्वरश्वासविस्फोटकहलीमका
न् प्रदररक्तपित्तंचहन्यान्मांसबलप्रदं शोषेद्राक्षादिघृ
तं वृंदसंग्रहात् छागमांसतुलांगृह्यसाधयेदुल्वणेंभसि
पादशेषेणतेनैवसर्पिःप्रस्थंविपाचयेत् ऋद्धिवृद्धिश्चमे
देद्वेतथाजीव कर्षभौ काकोलीक्षीरकाकोलीकल्कैः
पृथक्पलोन्मितैः सम्यक्सिद्धेवतार्याथशीतेतस्मिन्प्रदा
पयेत् शर्करायाःपलान्यष्टौमधुनःकुडवंक्षिपेत् पलंप

लंपिबेत्प्रातः यक्ष्माणंहंतिदुस्तरं बल्यंमांसकरंवृष्यम
ग्निसंदीपनंपरं छागलाद्यंघृतं मलायत्तंबलंपुंसांभुक्ता
यत्तंचजीवितं तस्माद्यत्नेनसंरक्षेद्यक्ष्मिणोमलरेतसी
इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेव
विरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपाका
युर्वेदोक्तप्रयोगेराजयक्ष्माधिकारः अथक्रमप्राप्तस्य
कासरोगस्यचकफश्वासस्यजातकाभिप्रायेणहेतुमाह
तत्प्रतीकारंच यदुक्तंजातके सूर्येकुलीरयातेवुधेनदृ-
ष्टेविगतनेत्रः कफमारुतरोगार्त्तःपरस्वहारीविलोमम
तिश्चेष्टः कर्कांतस्थितवुधदृष्टसूर्यजनितकासश्वासक
फरोगप्रतीकारमाह सौरमंत्रजपहोमदानादिकंपूर्ववत्
त्कार्यं अथकासश्वासकफरोगस्यकर्मविपाकहेतुमाह
तत्प्रतीकारंच यदुक्तं उपकारिणोप्रत्युपकर्त्ताअपकर्त्ता
चश्वासीकासीकफवान्जायते दुःखोष्णज्वरवातपित्तं
च यदुक्तमुमामहेश्वरसंवादे कृतघ्नोजायतेमर्त्यःकफवा
न्श्वासकासवान् उष्णज्वरीचनित्यंहिपित्तरोगसमन्वि
तइति तच्छांतयेपिपीलिकामध्यानियवमध्यानिचात्री
णिचांद्रायणानिकुर्यात् यथेप्सितंपंचशद्ब्राह्मणान्भो
जयेत् अग्निदूतमितिसूक्तेनचरुघृताभ्यामष्टोत्तरा
युतंजुहुयात् तद्विष्णोरितिसूक्तेनजपंकुर्यात्द्विजोत्त
मः पूजयेद्भोजयेद्यात्तन्मनानान्यमानसः अत्रैवका

रणांतरंविधानांतरमभिधीयते लवणमधुकृष्णाजि
नमहादानादिकुरुक्षेत्रादिविशिष्टदेशेषुग्रहणादिवि
शिष्टकालेषुनिषिद्धदातृभ्यःप्रतिगृण्हाति स्वयमपा
त्रीभूतोजन्मांतरेपामाकंडूपीड्यमानःश्वासीकासीकृ
मिकुक्षिश्चभवति तदुपशांतयेमहर्षीयंयथोक्तविधानं
दद्यात् वित्तशाठ्यंविवर्जयेत् यतः काम्यायदीयतेदा
नंतत्समग्रंसुखावहं असमग्रंतुदोषायभवतीहपरत्रच
पुरुषसूक्तंसहस्रनामस्तोत्रंउद्यात्यृचंजपेत् अष्टोत्त
रायुतंचरुघृताभ्यांजुहुयात् पंचाशद्ब्राह्मणान्भोजयेत्
रक्तवासांसिदद्यात् तदुक्तंमहाभारते हिरण्यंरक्तवासां
सिपंचाशद्विप्र भोजनंसह स्रकलशस्नानंकुर्याद्रोग-
स्यशांतये एतदुक्तंशक्तोपंचाशद्ब्राह्मणभोजनं नामत्र
यमष्टोत्तरायुतत्रयंजपेत् अत्रनामत्रयमितिअच्युता
नंतगोविंदेति अत्रापिब्राह्मणभोजनं सहस्रकलश-
स्नानंवासुदेवप्रीतयेहिरण्यंचदद्यात् अथवाश्वासका
सीकृमिकुक्षिश्चयोभवति श्वासकासयुतोमर्त्योवरुणं
प्रणतोभवेत् ध्वजंपाशंपलैकेनकुर्यात्तुरजतेनवा पल
र्द्धेनाथवाशक्त्यास्फटिकोपममाहृतः रत्नैर्मरकतैःसम्यग्व
द्धमंगेषुसर्वतः कुंभंचस्थापयेत्तत्रतिलानांद्रोणपंचके
कुंभस्योपरिसंस्थाप्यध्वजपाशैसशोभनैः सहिरण्यं
द्वयंतत्तुब्राह्मणायनिवेदयेत् वस्त्रेणावेष्ट्यतंकुंभंगंध

पुष्पाक्षतार्च्चितं श्रुतवृत्तसमग्रायश्रोत्रियायकुटुंबिने
वरुणस्यतथावायोः प्रीत्यर्थंविनिवेदयेत् नमःपाशभृ
नेतुभ्यंनमोद्विजवरायते जलाधिपतयेतुभ्यंवायोर्वापि
प्रियायच युवयोःप्रीतयेदत्तौध्वजपाशौसुराजतैः श्वास
कासौहरेतांमेप्रीतौसर्वजनाश्रयौ एवंकृत्वाश्वासकासी
नीरोगस्तत्क्षणाद्भवेत् इतिश्वासकासकर्मविपाकविधिः
अथज्योतिःशास्त्राभिप्रायेणगद्गदत्वप्रयोगमाह वृश्चि
कांशस्थितक्षीणचंद्रजनितगद्गदत्वदोषोपशमनायप्रा
गुक्तंचंद्रपूजाविधानंविदध्यात् अथगद्गदत्वकर्मविपा
कमाह तत्प्रतीकारंच वायुपुराणे वाग्विरोधंगुरोःकृत्वा
भवेद्गद्गदवान्नरः तस्यवक्ष्येप्रतीकारंदानेनऋषिभा
षितं पलेनाथतदर्द्धेनतदर्द्धार्द्धेनवापुनः सरस्वतीप्रति
माकुर्याद्भुजानांचचतुष्टयं वरदंचाक्षसूत्रंचबिभ्रतींदक्षि
णेकरे पुस्तकंचाभयंवामेदधानांहंसवाहनां अतिसु-
श्वेणरौप्येनकूटस्वर्णेनवाभवेत् आसनंचप्रकुर्वीतसौ
वर्णपद्ममुत्तमं तस्योपरिचसंवेश्यदेवींवागीश्वरींपरां
मुक्तादामसमायुक्तांशकुवस्त्रेणसंयुतां वागीश्वरेण
मंत्रेणपूजयेत्पीततंडुलैः श्वेतपुष्पैःश्वेतगंधैःसतूस्त्य
विधिपूर्वकं ब्राह्मणःसर्वशास्त्रज्ञः कुशलःसर्वसंमतः
मंत्रवादप्रवीणश्चतेनहोमंचकारयेत् पायसंजुहुयादष्ट
शतंशालिमयंतथा जुहुयात्समिधश्चापितथाज्यंचति

लानपि सरस्वतिप्रदेमिवइतिवामंत्रइष्यते कृतेधिवा
सनेनामआचार्यायनिवेदयेत् मंत्रेणानेनविधिवत्प्राङ्मु
खायत्युदङ्मुखः संपूज्यब्राह्मणंसम्यक्वस्त्रालंकार
पूर्वकं यावक्तेब्रह्मणोदेवीयासावागीश्वरीपरा ब्रह्माबि
ष्णुशिवश्चान्यैः पूजितासर्ववंदिता तुष्टाभवतुदानेन
समिदाज्यतिलैरपि नैवेद्यंपायसंदद्याद्देयंचब्राह्मणेत
था सरस्वतिप्रदेमिवमंत्रः सर्वत्रैवसमंततः तस्मैहुत
वतेदद्यात्तांघंटांपूजितायतु मंत्रेणानेनविधिवद्रोगीपू
र्वमुखः शुचिः उदङ्मुखोपविष्टायसतोयामथभक्ति
तः गुरोरवज्ञयायन्मेस्वाध्यायाध्ययनंकृतं सरस्वती-
जगन्माताजगज्जाड्यापहारिणि साक्षाद्ब्रह्मकलत्रत्वं-
विष्णुरुद्रादिभिस्तुता तन्ममाध्यापनंदेहिजाड्यंहरव
रानने घंटादानेनतुष्टात्वंदत्तेनानेनवाक्परा वाग्विरोधं
गुरोःकृत्वायन्मेगद्गदभाषितं तत्सर्वंक्षपयाक्षिप्रंब्राह्मी
त्वंलोकपावनी दानमंत्रः अनुज्ञाप्यब्राह्मणंतंस्वयंभुं
जीतमानवः इतिगद्गदत्वहरसरस्वतीदानविधिः अ
थक्रमप्राप्तस्यकासस्यनिदानंसचिकित्सितमाह रूक्ष
निश्वयात् धूमोपघातादूजसस्तथैवव्यायामरूक्षान्न
निषेवनाच्च विमार्गगत्वादतिभोजनस्यवेगावरोधात्क्ष
वथोस्तथैव प्राणोत्युदानानुगतःप्रदुष्टःसंभिन्नकांस्य
स्वनतुल्यघोषः निरेतिवक्रात्सहसासदोषोमनीषिभिः

कासइतिप्रदिष्टः पंचकासाःस्मृतावातपित्तश्लेष्मक्षतक्ष
यैः क्षयायोपेक्षिताःसर्वेबलिनश्चयथोत्तरे पूर्वरूपंभवे
त्तेषांशूकपूर्णगलास्यता कंठेकंडूश्चभोज्यानामवरोध-
श्चजायते त्हत्छंखमूर्द्धोदरपार्श्वशूलीक्षीनाननःक्षीणव
लस्वरौजाः प्रसक्तवेगश्चसमीरणेनभिन्नस्वरःकासतिशु
ष्कमेव उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृ
डार्त्तः पित्तेनपीतानिवमेत्कटूनिकासेत्सपांडुःपरिदह्य
मानः प्रलिप्यमानेनमुखेनसीदन्शिरोरुजार्तःकफपूर्ण
देहः स्भक्तरुग्गौरवसादयुक्तःकासेद्बृशंसांद्रकफः
कफेन वृंदसंग्रहात् पंचमूलीकृतःक्वाथःपिप्पलीचूर्ण
संयुतः रसोन म श्न तोनित्यंवातकासमुदास्यति भा
र्गीद्राक्षाशठीशृंगीपिप्पलीविश्वभेषजं गुडतैलयुतो
लेहोहितोमारुतकासिनां बलाद्विबृहतीवासाद्राक्षाभिः
क्वथितंजलं पित्तकासापहंपेयंशर्करामधुयोजितं पुष्क
रंकटूफलंभार्गीविश्वपिप्पलिसाधितं पीतंक्वाथंकफोद्रेके
कासेश्वासेचत्हद्गृहे घृतंव्याघ्रीकषायेणभार्गीकल्केवि
पाचयेत् चतुर्गुणेनतोयेनतत्परंवातकासजित् चूर्णंनु
पद्मबीजानांमधुनासंप्रयोजितं पित्तकासार्दितोलि
ह्यात्स्वस्थतांलभतेक्षणात् कर्षंकर्षार्द्धपलंपलद्वयंस्या
त्ततोर्द्धकर्षश्च मरिचस्यपिप्पलीनांदाडिमगुडयावशू
कानां सर्वौषधैरसाध्यायेकासाःसर्ववैद्यनिर्मुक्ताः पू

यमसृक्छर्दयतांतेषामिदमौषधंपरम् इतिमरिचादि
गुटिका प्रस्थंबिभीतकानामस्थीनिविहायसंस्वेदयेद्गो
मूत्रे लेहवद्यमवलेहोमधुसहितःश्वासकासहरः इति
बिभीतकावलेहः मतिसुकुशत् यःपिवेद्बृहतीक्वाथंकणा-
चूर्णावचूर्णितं भक्ताशोनास्यकासानामासानामिवदुर्दिने
दशमूलीस्वयंगुप्ताशंखपुष्पीसठीबलाः हस्तिपिप्पल्यपा
मार्गपिप्पलीमूलंचित्रकं भार्गीपुष्करमूलंचद्विपलांशा
न्यथाढकं हरीतकीशतंचैकंजलेपंचाढकेपचेत् यवैःस्वि
न्नैःकषायंतुपूतंदत्वाभयाशतं पचेद्गुडतुलांदत्वाकुड
वंचपृथक्पृथक् —— तैलात्सपिप्पलीचूर्णासिद्धशी
तेचमाक्षिकात् लिह्यात्तच्चामयेनित्यमतःखादेद्रसाय
नं तद्वलीपलितंहंति वर्णायुर्बलवर्द्धनं पंचकासान्क्ष
यंश्वासंहिक्कांचविषमज्वरं हन्यात्तथार्शोग्रहणीहृद्रोगा
रुचिपीनसं अगस्तिविहितंधन्यमिदंश्रेष्ठंरसायनं अ
गस्तिहरीतक्यावलेहः इतिश्रीतोमरवंशावतंसरिपु
भूतभैरवश्रीवीरसिंहदेवविरचितेवीरसिंहावलोकेज्यो
तिःशास्त्रकर्मविपाकायुर्वेदप्रयोगःकासाधिकारः अ
थहिक्कारोगस्यश्वासकासांतर्भावित्वात्तद्देवग्रहपूजा-
विधानं कर्मविपाकप्रयोगंदर्शयति यःपुनःस्नात्वाअ
जप्त्वा दहुत्वावाब्राह्मणोभुंक्तेसहिक्कारोगीभवेत् स
त्रीणिचांद्रायणानिसांतिकृच्छ्राणिचरेत् तामग्निवर्णभि

त्यादिसूक्तंजपेत् सस्रुवणमन्नदानंचिकित्सितमाह निदानंच रुग्विनिश्चयात् मुहुर्मुहुर्वायुरुदेतिसस्व नोयकृत्प्लीहांत्राणिसुखादिवाक्षिपन् सघोषवानाशु हिनस्तियद्बलात्ततस्तुहिक्केत्यभिधीयतेबुधैः अन्नजां यमलांक्षुद्रांगंभीरांमहतींतथा वायुःकफेनानुगतःपं चहिक्काःकरोतिहि अथसुश्रुतात् यष्ट्याह्वंवामाक्षि केणावपीडं पिप्पल्योवाशर्करचूर्णयुक्ताः सर्पिःकोष्णं क्षीरमिक्षोरसोवानातिक्षीणेक्षंसनंछर्दनंवा नारीपयः पिष्टमशक्तचंदनंघृतंसुखोष्णंचससैंधवंतथा चूर्णीकृ तंसैंधवमंबुनाथवानिहंतिहिक्कांविहितंचनस्यात् युं- ज्याद्धूमंशालनिर्यासजंवानेपालंचागोविषाणोद्भवंवा सर्पिःस्निग्धैश्चर्मवालैः कृतंवाहिक्कास्थानेस्वेदनंवापि- कार्यं क्षौद्रोपेतंगैरिकंकांचनाख्यंलिह्या.द्रस्मग्राम्यस त्वास्थिजंवा तद्वच्छ्वाविण्मूषगोशल्यकानांरोमाण्यं तर्धूमदग्धानिचात्र मस्त्वाज्याक्तंवर्हिपत्रप्रभूतमेवंभ स्मोदुंबरंतैंदुकंवास्वर्ज्जक्षारंवीजपूरद्रसेनक्षौद्रोपे तंहंति लिह्वाशहिक्कां सर्पिःस्निग्धाघ्नंतिहिक्कांयवाग्वः कोष्णग्रासाः पायसोवासुखोष्णः शुंठीतोयेसाधितं- क्षीरमाजंतद्धृत्पीतंशर्करासंयुतंवा आतृप्तेर्वासेव्यमा नंनिहन्याद्धान्याहिक्कामाशमूत्रंत्वजासु पूतिकीटलसु नोग्रगंधाहिंग्वज्जमाचूर्णसुभावितंतत् क्षौद्रंसितांवार

णकेसरंच।पिवेद्रसेनेक्षुमधूकजेन पिवेत्सलंचालवणो
त्तमस्यद्वाभ्यांपलाभ्यांहविषःसमग्रां हरीतकींचोष्णजला
नुपानां।पिवेद्धृतंक्षारमधूपपन्नं रसंकपित्थंमधुपिप्पली
भ्यां।पाणिप्रमाणंप्रपिवेत्सुखाय कृष्णासितामामलकं
चली द्राक्षाशृंगवेरंमधुनाचयुक्तं कोलास्थिमज्जांजनला
ज चूर्णैर्हिक्कांनिहन्यान्मधुनावलीढं पाटलायाःफलंपु-
ष्पंगैरिकंकटुरोहिणी खर्जूरम धुमागध्यःकासीसंद
धिनामच चत्वारएतेयोगाःस्युःप्रतिपादंप्रदर्शिताः मधु
द्वितीयःकर्त्तव्यास्तेहिक्कासुविजानता कपोतपारावत-
लावशल्यकग्धदं ष्टगोधावृषदंसजान्रसान् पिवेत्फ-
फलाम्लानहिमान्ससैंधवान्सुभांस्तथैवर्क्ष्यमृग द्विजोद्भवा
न् विरेचनंपथ्यतमंससैंधवंघृतंसरवोष्णंससितोपला
युतं सदागतावूर्द्धगतेनुवासनंवदंतिकेचिन्महितायहि
क्किनः इतिश्रीतोमरवंशावतंसारिपुभूतभैरवश्रीवीर
सिंहदेवविरचितेवीरसिंहावलोकेज्योतिःशास्त्रकर्मवि
पाकायुर्वेदप्रयोगोहिक्काधिकारः अथक्रमप्राप्तस्य
श्वासरोगस्यसनिदानंचिकित्सितमाह यथाहसु-
श्रुताचार्यः यैरेवकारणैर्हिक्कावहुभिःसंप्रवर्त्तते तैरे
वकारणैःश्वासोघोरोभवतिदेहिनां विहायप्रकृतिंवा
युःप्राणोथकफसंयुतः श्वासयत्यूर्द्धगोभूत्वातंश्वासंप
रिचक्षते क्षुद्रकस्तमकश्छिन्नोमहानूर्द्ध्वश्चपंचमः भिद्य

नेसमहाव्याधिःश्वासएकोविशेषतः प्रागूपंतस्यहृत्पी
डाभक्तद्वेषोरतिभ्रमः आनाहःपार्श्वयोःशूलंवैरस्यंवदन
स्यच हृंदसंग्रहान् स्नेहवस्तिमूनेकेचिद्दूर्द्ध्वाधश्चशोध
नं मृदुप्राणवतांश्रेष्टंश्वासिनांनिर्दिशंतिहि कुलस्थनाग
रव्याघ्रीवासाभिःक्वथितंजलं पीतंपौष्करसंयुक्तंश्वास
कासनिवारणं दशमूलस्यवाक्काथःपुष्करेणावचूर्णितः
श्वासकासप्रशमनःपार्श्वशूलविनाशनः देवदारुवचाव्या
घ्रीविश्वकट्फलपौष्करैः कृतःक्वाथोजयत्याशुश्वासका
सानशेषतः भल्लातकमधुपर्णीपिथ्यादशमूलनागरक्का
थः तमकेकफप्रधानेशस्तःश्वासेचमारुतजे भार्गी
जटापलशतंसलिलार्मणभ्यांयुक्तंचमूल तुलयासहि
तंविपाच्य पादस्थितेतुशतमत्रहरीतकीनांपक्त्वा
मुज्ज्वलगुडस्यशतेनसार्द्धं उत्तार्यतत्रशिशिरेमधुनः
पलानिचत्वारिचद्विगुणितानिपलत्रयंच व्योषत्रुटि
त्वगिभकेसरपत्रकाणामेषांपलंखलुनिधेयमथोप
युज्यात् श्वासंसकासमपिशोषमथातिहिक्कामेका
हिकंज्वरमथोत्कटपीनसंच हन्याद्रसायनमिदंहिपु
रंदरस्यप्रोक्तंसहस्रकरपुत्रभिषग्वराभ्यां भार्गीहरी
तक्यवलेहः यत्किंचित्कफवातघ्नमुष्णंवातानुलोम
नं भेषजंपानमन्नंवाहिक्काश्वासेषुतद्धितं इति
श्रीतोमरवंशावतंसारिपुभूतभैरवश्रीवीरसिंहदेववि

रचितेग्रंथेवीरसिंहावलोकेज्योतिशास्त्रकर्मविपाका-
युर्वेदप्रयोगः श्वासाधिकारः अथक्रमप्राप्तस्यस्वरभेद
स्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् अत्युच्च
भाषणविषाध्ययनाभिघातसंदूषणैः प्रकुपिताःपवना
दयश्च स्रोतःसुतेस्वरवहेषुगताःप्रतिष्टांहन्युःस्वरंभव-
तिचापिहिषड्विधःसः वृंदसंग्रहात् आद्येकोष्णजलंपे
यंजग्ध्वाघृतगुडौदनं क्षीरानुपानंपित्तोत्थेपिबेत्सर्पि-
स्तुद्रितः पिप्पली पिप्पलीमूलंमरिचंविश्वभेषजं पिबे
न्मूत्रेणमतिमान्पित्तजेस्वरसंक्षये स्वरोपघातेमेदो
जेकफातोविधिरिष्यते क्षयजेसर्वजेवापिप्रत्याख्याया
चरेत्क्रिया चव्याम्लवेतसकटुत्रि कतिंतडीकतालीस
क्षीरकतुगादहनैःसमांसैः चूर्णगुडप्रमृदितंत्रिसुगं
धियुक्तंवैस्वर्यपीनसकफारुचिषुप्रशस्तं वदरीपत्रं
कल्कंवाघृतभृष्टंससैंधवं स्वरोपघातेकासेचलेहमे
नंप्रयोजयेत् शर्करामधुमिश्राणिसृतानिमधुरैःसह
पिबेत्पयांसियस्योच्चैर्वदतोभिहतःस्वरः व्याघ्रीस्वर
सविपक्वंराष्णावाट्यालगोक्षुरैर्व्योषैः सार्पिःस्वरोपघातं
हन्यात्कासंचपंचविधं शुष्कद्रव्यमुपादायस्वरसाना-
मसंभवे वारिण्यष्टगुणेसाध्यंग्राह्यंपादावशेषितं इ
तिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेव
विरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपा-

कायुर्वेदप्रयोगःस्वरोपघाताधिकारः अथमंदाग्नि
त्वादरोचकप्रयोगंज्योतिशास्त्राभिप्रायेणाह तत्प्र
तीकारंच अतिपरिभूतःकृपणः सहृजयुतोमानवो
भवतिजीवे मंदाग्निस्त्रीविजितोदुश्चिक्ये पापकर्मा
च इतिदुश्चिक्यस्थानस्थितस्यगुरोःप्रागुक्तंजपहो
मदानस्नानादिकंविदध्यात् तेनोपशाम्यति अथक
र्मविपाकाभिप्रायेणअरुचिप्रतिकारमाह यथाश्र
द्धाहीनोधनीअदातादानरतिर्वातासमसगुणान्वितो
यःसोरुचिमान्शूलीवाजायते अस्यप्रायश्चित्तंकृछ्
मतिकृछ्चांद्रायणव्यस्तं समस्तंवाव्याधितारतम्ये
नकुर्यात् अत्राशक्तौधनीवाप्रतिदिनंपंचाशब्राम्ह
णभोजनमिष्टान्नंकारयेत् अत्राप्यशक्तोहोमसत
तंकुर्यात् जपंहोमंतथातीर्थेस्नानंवापिसमाचरेत्
तीव्रवैराग्नसंयुक्तोकूर्याद्ब्राम्हणभोजनं मिष्टान्नं
दद्यादितिवचनात् अग्निरश्मीतिमंत्रेणजपेद्युत
संख्यया चरुणाचघृतेनैवजुहुयाद्धव्यवाहने जपा
दिकंयावद्रोगयुक्तोभवतितावदेवकर्तव्यं एतद्ब्राम्ह
णविषयं इतरविषयेहेमान्नदानमेवप्रशस्तं इत्यरु
चिशूलविधानं अथक्रमप्राप्तस्यारोचकस्यसनिदा
नंचिकित्सितमाह रुग्विनिश्चयात् वातादिभिः शो
कभयातिलोभक्रोधैर्मनोघ्नाशनगंधरूपैः अरोचकाः

स्युः परित्दृष्टदंतःकषायवक्त्रश्च मतोनिलेन वस्तिः समीरणेपित्तेविरेको वमनंकफेकुर्याद्धि धानुकूलानि हर्षणंमनसस्तथा अम्लीकागुडतोयंचत्वगेलामरि चान्वितं अभक्तछंदरोगेषुशस्तंकवलधारणं भोज-नाग्रेसदापथ्यंजिह्वाकंटकशोधनं अग्निसंदीपनंहृ द्यंलवणार्द्रकभक्षणं विचूर्ण्यमधुसंयुक्तोरसोदाडिम संभवः असाध्यामपिसंहन्यादरुचिंवक्त्रसारितः दाडि माद्यानिचूर्णानिपूर्वोक्तानिप्रयोजयेत् यस्ययद्वांछि तंकिंचित्तद्देयमरुचौसदा इत्यरोचकाधिकारः अ थज्योतिःशास्त्राभिप्रायेणछर्दिरोगस्यप्रयोगोभि धीयते तत्प्रतीकारश्च रिपुस्थानेयदास्यातांचांद्रि शुक्रौततोभवेत् छर्दिमान्मनुजः कृष्णपक्षचंद्राव लोकितो क्षीणचंद्रावलोकितषष्टस्थानस्थितबुध शुक्रबाधोपशांतयेतत्प्रीतयेबुधस्यतुपूर्वोक्तमेव सकलं जपहोमदानादिविधानंविदध्यात् शुक्रस्य तुवक्षामः अन्नात्स्यादिश्रुतेतिमंत्रजपः तिलाज्यौ दुंबरीसमिद्भिर्होमः अश्वदानंस्नानंच एलयाच शिलयासमान्वितैर्वारिभिःसफलमूलकुंकुमैःस्ना नतोभृगुसुतोपपादितंदुःखमेतिविलयंनसंशयः इतिश्रीपतिवचनात् रौप्यंधारयेत् हविष्यंनैवेद्यं दद्यात् अथछर्दिरोगस्यकर्मविपाकमाह तत्प्रती-

कारंच योब्राह्मणायकेशकीटककाकसारमेयाद्युपह
तमन्नंजानन्नेवमोहात्प्रयच्छति सच्छर्दिमान्जायते य
दुक्तंशातातपीयेकर्मविपाके श्वकीटकेशकाकादिदूषि
तंमोहतोनरः दत्वाद्विजायभवतिछर्दिमानन्यजन्म-
नीतिवचनात् गौतमोक्तमपि विश्वासघातकीछर्दि
युक्तोभवतितदुक्तं शातातपीयेपंचाशद्ब्राह्मणभोजनंकार्य
त् अन्नदानंचयथाशक्त्याआज्ययुक्तकुर्यात् अग्निर
श्मिजन्मनेतिमंत्रेणव्याधिगुरुलघुभावितजपंकुर्यात् ति
लहोमंचकुर्यात् तेनोपशांतिर्भवति अथक्रमप्राप्तस्यछ
र्दिरोगस्यनिदानंचिकित्सितमाह रुग्विनिश्चयात् दुष्टैर्दो
षैःपृथक्सर्वैर्बीभत्सालोकनादिभिः छर्दयःपंचविज्ञेया-
स्ताःपृथग्लक्षणैर्मताः हृल्लासोद्गाररोधौचप्रसेकोलवणास्य
ता दोषोन्नपानेषुभृशंवमीनांपूर्वलक्षणं कासश्वासो-
ज्वरोहिक्कातृष्णावैचित्त्यमेवच हृद्रोगस्तमकश्चैवज्ञेया
श्छर्देरुपद्रवाः वृंदसंग्रहात् अमाशयोत्क्लेशभवाहिसर्वा
छर्द्योमतालंघनमेवतस्मात् पक्वाशयेमारुतजान्विता-
यांसंशोधनंवाकफपित्तहारि हन्यात्क्षीरोदकंपीतंछर्दि
पवनसंभवां ससैंधवंपिबेत्सर्पिर्वातछर्दिनिवारणं मुद्गा
मलकयूषोवाससर्पिष्कःससैंधवः यवागूमधुमिश्रंवापंच
मूलीकृतंपिबेत् अथसुश्रुतात् दधित्थरसयुक्तंपिप्पली
माक्षिकान्वितंमुहुर्मुहुर्नरोलीढ्वाछर्दिभ्यःप्रतिमुच्यते स

माक्षिकामधुयुतापीनावातंदुलांबुना नर्पणंवामधुयुतं तिसृणामपिभेषजं स्वयंगुप्तांसपष्ट्याह्वंतंडुलांवुमधुद्रवं पिबेद्यवागूमथवासिद्धांपत्रैःकरंजकैः युक्तं सलवणंपिष्टंकुंस्तुंवुरूर्वावाहितं तंडुलांवुयुतंरवादेत्कपित्थंत्र्यूषणेनवासितावंदनमध्वाक्तंलित्याद्वामाक्षिकाशकृत् पिवेत्पयोग्नितप्तं वानिर्वाप्यगृहगोधिकां सर्पिःक्षौद्रयुतंवापिलाजा सक्तुंपिबेत्तथा धात्रीरसेचंदनंच कृतं मुद्गदलांवुना कोलामलकमुद्गोवालित्वा द्वाग्निसुगंधको सक्षौद्रांसालिलाजानांयवागूंवापिवेन्नरः प्रियाण्युपहरेच्चापिमनोज्ञानिसुखानिच जांगलानिवशून्यानिपानकानिस्फुभानिच भोजनानिविचित्राणिकुर्यात्सर्वास्वतंद्रितः अप्रियाण्यपिसेवेतजलेनोद्वेजयेदिति इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगः छर्द्यधिकारः अथतृष्णामूर्छारोगयोःसाकल्पेनैवज्योतिःशास्त्राभिप्रायेणहेतुमाह तत्प्रतीकारंच यथोक्तंजातके सिंहस्थोद्विजनाथः करोतिजातंरदेनजठररोगार्त्तं स्त्रीद्वेषिणंवापुरुषंतथापिपासाक्षुधाविष्टं मूर्छाशोणितदोषाः शास्त्राल्छेदोव्रणश्चापिपित्तसमुत्थैदोषैरभिभूतोमानवोभवतिइतिभौमफलं तज्जनितमूर्छातृष्णादोषोपशमनायपूर्वोक्तमेवभौमप्रीतयेजपहोमदानस्नाना

दिकंनिखिलमपिविधेयं तेनशांतिर्भवति चंद्रस्यापिपूर्वो
क्तमेवजपादिविदध्यात् अथतृष्णामूर्छारोगयोः कर्मवि
पाकमाह यदुक्तंपद्मपुराणे पांथमध्वपरिश्रांतंब्राम्हणं
गामथापिवा नपाययेज्जलंयस्तुसतृष्णामूर्छितोभवेत्
वारुणंसजपेत्सूक्तंहोमंकुर्याद्दतोद्भितः विदध्याज्जलदा
नंचतृष्णामूर्छोपशांतये पानीयंपायसंमुद्रान्शर्कराघृत
संयुतान् इदमावश्यकंदेयंमूर्छातृष्णोपशांतये इतिव
चनात् एवंकृतेदोषोपशांतिर्भवति अथक्रमप्राप्तस्य
तृष्णारोगस्यसनिदानंचिकित्सितमाह यथाहसुश्रुता
चार्यः सततंयःपिबेद्वारिनतृप्तिमधिगच्छतिपुनःकांक्षति
यत्तोयंतंतृष्णार्दितमादिशेत् संक्षोभशोकश्रममध्वया
नाद्रूक्षाम्लशुष्कोष्णकटूपयोगात् धातुक्षयाल्लंघनसू
र्यतापात्पित्तंचवातश्चभृशंप्रवृद्धौ श्रोतांसिसंदूषयतः
समेतोपानांवुवाहीनिशरीरिणोहिस्रोतस्वपांवाहिषुदू
षितेषुजायेततृष्णातिवलाततश्चातिस्रःस्मृतास्ताः क्ष
तजाचतुर्थीक्षयजात्तथान्यामसमुद्भवाचस्यात्सप्तमीभुक्त
निमित्तजाचलिंगानितासांशृणुसौषधानि ताल्वोष्ट
कंठास्यविनोददाहाःसंतापमोहभ्रमविप्रलापाः पूर्वाणि
रूपाणिभवंतितासामुत्पत्तिकालेषुविशेषतोहि तृष्णा
तिवृद्धावुदरेचपूर्णेसंछर्दयेन्मागधिकोदकेन विलोमनं
वा त्रहितंविधेयंस्याद्दाडिमाम्रातकमातुलिंगैः तृष्णाप्र

योगैरिहसन्निवार्या शीतैश्चसम्यग्रसवीर्यजातैः गंडूषम
म्लैर्विरसेमुखेवकुर्यात्तुभैरामलकस्यचूर्णैः स्वर्णरूपादि
भिरग्नितप्तैर्लोष्टैःकृतंवासिकतोसलैर्वा जलंसुखोष्णं
शमयेच्चतृष्णांसशर्करं क्षौद्रयुतंहिमंवा पंचांगिकाःपंचग
णायदुक्तास्तेष्वंबुसिद्धंप्रथमेगणेच पिबेत्सुखोष्णंमनुजो
चिरेणतृषोविमुच्येतहिवातजायाः पित्तप्रवर्गेणकृतःक
षायःसशर्करःक्षौद्रयुतःसुशीतः पीतःतृषांपित्तकृतांनि
हंतिक्षीरं भृतंचाप्यथजीवनीयैः बिल्वाढकीधान्यसपं
चमूलदर्भेषुसिद्धंकफजांनिहंति हितंभवेत्कर्दममेवचा
न्नतमेननिंबप्रसवोदकेन सर्वास्तृष्णास्त्वथवापिपेन्नं
कुर्याद्द्धितेनाविनानसंति पर्यागतोदुंबरजोरसश्चस
शर्करस्त्वक्वथितोदकंवा वर्गस्यसिद्धस्यचसारिवेहूपा
तव्यमंभःशिशिरंभिडान्तैः कसेरुशृंगाटकपद्ममोचवि
शेक्षुसिद्धंक्षतजान्निहंति लाजोत्पलोसीरकुचंदनानि
दत्वाप्रवातेनिशिवासयेत तदुत्तरंतोयमुदारगंधिसि-
त्तायुतंक्षौद्रयुतंवदंति द्राक्षाप्रगाठंचहितार्थवैद्यस्तृष्णा
र्दितेभ्योवितरेन्नरेभ्यः ससारिवादौतृणपंचमूलेनथोत्प
लादौप्रथमेगणेवा कुर्यात्कषायाणियथैनदुक्तंमधूकपु
ष्पादिषुवापचेषु राजादनंजीरिकपातनेषुउद्यानकान्य
न्नहितानिचस्युः सतुंडिकेराण्यथवापिबेत्तुपिष्टानिका
र्पासमुद्भवानि क्षतोद्भवात्तृड्निवारणेनजयेद्रसा

नामसृजश्चपानैः क्षयोत्थितांक्षीरघृतंनिहन्यान्मांसो दकंवामधुकोदकंच आमोद्भवांविल्ववचायुतानांजयेः त्कषायैरथदीपनानां आम्रातभल्लातचलायुतानिपिबे त्कषायाण्यथदीपनानि गुर्वन्नजातांवमनैर्जयेत्तुक्षया द्भतेसर्वकृताश्चतृष्णाः आमोद्भवांमांसरसोनिहंति गु डोदकंवाप्यथवापिमंथः भक्तोपरोधात्तृषितोयवागूमुष्णां पिबेन्मंथमथोहिमंवा यास्नेहपीतस्यभवेच्चतृष्णातत्रो ष्णमंभः प्रपिबेन्मनुष्यः मद्योद्भवामर्द्धजलंनिहंतिमद्यं तृषंवापिबतोभवेच्चतृष्णोद्भवांहंतिजलंस्कशीतंसशर्क रंवेक्षुरसंतथांभः स्वैःस्वैःकषायैर्वमनानितासांतथाज्व रोक्तानिचपाचनानि लेपावगाहोपरिषेचनानिकुर्यात्त थाशीतगृहानिचापि ——————————— ——————————— इतिश्रीतोमरवंशावतंस रिपुभूतभैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहा वलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगःतृष्णा धिकारः अथक्रमप्राप्तस्यमूर्छारोगस्यसनिदानंचिकि त्सितमाह यथाहसुश्रुताचार्यः क्षीणस्यबहुदोषस्य विरुद्धाहारसेविनः वेगाघाताद्भिघाताद्धीनसत्वस्य वापुनः करणायतनेषूग्रा बाह्येष्वभ्यंतरेषुच निविशंते यथादोषास्तदामूर्छातिमानवाःसंज्ञावहासुनाडीषुपिहि तास्वनिलादिभिः तमोभ्युपैतिसहसासुखदुःखव्य

मोहाच्चनरः पततिकाष्ठवत् मोहोमूर्छेतितामाहुः षड्वि
धासाप्रकीर्तितावातादिभिः शोणितेनमद्येनचविषेणच
षट्स्वप्येतासुपित्तंतुप्रभुत्वेनावतिष्ठते हृत्पीडाजृंभनं
ग्लानिःसंज्ञानाशोबलस्यच सर्वासांपूर्वरूपाणियथास्व
मुपलक्षयेत् अपस्मारेणलिंगानितासामुक्तानितत्वतः
पृथिव्यंभस्तमोरूपंरक्तगंधश्चतन्मयः तस्माद्रक्तस्य
गंधेनमूर्छंतिभुविमानवाः द्रव्यस्यभावइत्येकेदृष्ट्वायद
भिमुह्यति गुणास्तीव्रतरत्वेनस्थितास्तुविषमद्ययोः
तएवतस्माज्जायेतमोहस्ताभ्यांयथेरितः स्तब्धांगदृ
ष्टिस्त्वसृजागूढोच्छ्वासश्चमूर्छितः मद्येनविलपन्शेतेन
ष्टविभ्रांतमानसः गात्राणिविक्षिपन्भूमौजरांयावन्न
यातितत् वेपथुःस्वप्नतृष्णास्युःस्तंभश्चविषमूर्छिते
वेदितव्यंतीव्रतरंयथास्वंविषलक्षणैः सेकावगाहोम-
णयःसहाराःशीताःप्रदेहाः व्यजनानिलश्च शीतानि
पानानिचगंधवंतिसर्वासुमूर्छास्वनिवारितानि सिता
म्रयालेक्षुरसप्लुतानिद्राक्षामधूकस्वरसान्वितानि-
खर्जूरकाश्मर्यरसैःश्रृतानिसिद्धानिसर्पींषिचजीव
नानि सिद्धानिवर्गेमधुरेपयांसिसदाडिमाजांगलजार
साश्च तथाययबालोहितशालयश्चमूर्छासुपथ्याश्चस
दासतीनाः भुजंगपुष्पंमरिचान्युशीरंकोलस्यमध्यंचपि
बेत्समानि शीतेनतोयेनविशंमृणालंक्षौद्रेणकृष्णांसित

याचपथ्या कुर्याञ्चनासावदूनावरोधंक्षीरंपिवेद्गव्य
थमानुर्षीणा मूर्छाप्रसक्तांतुशिरोविरेकैर्जयेदभीक्ष्णं
वमनैश्चतीक्ष्णैः हरीतकीक्काथघृतंपिवेद्वाधात्रीफलानां
स्वरसैःकृतंवा द्राक्षासितादाडिमलाजवंतिशीतानिनी
लोत्पलपद्मवंति पिवेत्कषायाणिचगंधवंतिपित्तज्वरंवा
शमयंतियानि प्रभूतदोषस्तमसोतिरेकात्समूर्छितोनैव
विबुध्यतेयः संन्याससंज्ञोभृशदुश्चिकित्स्योज्ञेयस्त
दाबुद्धिमतानरःण्प यथामलोष्ठंसलिलेनिषिक्तंसमु-
द्धरेद्यश्चविलीनमेवतद्वच्चिकित्स्येत्त्वरयाभिषिंचमस्वेदनं
मृत्युवशंप्र याति तीक्ष्णांजनाभ्यांजनधूमयोगैस्त
थानखाभ्यांतरतोत्रयानैः वादित्रगीतानुजैरपूर्वैर्विम्ला
पनैर्गुसफलावकर्षैः आभिःक्रियाभिर्नलब्धसंज्ञासाना
हलाश्वसनश्चवर्ज्यः प्रबुद्धसंज्ञं वमनानुलोम्यैस्तीक्ष्णैर्वि
शुद्धंलघुपथ्यभुक्तं फलत्रिकैश्चित्रकनागराद्यैस्तथा
श्मजातान्ज्जतुनःप्रयोगैः सशर्करैर्मासमुपक्रमेतवि-
शेषतोजीर्णकृतंचपायः यथास्वंचज्वरघ्नानिकषाया-
ण्युपयोजयेत् सर्वमूर्छापरीतानांविषजानांविषापहं
इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेव
विरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपा
कायुर्वेदप्रयोगः मूर्छाधिकारः अथेदानींपानात्यय
दोषस्यमहोन्मादस्यचज्योतिःशास्त्राभिप्रायेणहेतु

माह तत्प्रतीकारंच यदुक्तंजातके बहुशास्त्रदारित मुखोराज्ञादूतोविदेशगः स्फुततनुःबुधराशौदिनभर्तरि दृष्टेगुरुणामहोन्मादः अन्यच्च योगिन्याप्रभवैर्दोषैर्व्या ध्यादिपीडितोमनुजः शुक्रेकर्कटसंस्थेस्वदोषवत्सुक लदोषसंतप्तः अपरंच दाक्षिण्यरूपधनभोगगुणैःप्र धानश्चंद्रेकुलीरवृषभाजगतेविलग्ने उन्मत्तनीचवि कलोवधिरश्चमूकःशेषेषुनाभवतिकृष्णतनौविशे षात् अन्यच्च स्फुरवस्फुतवित्तविहीनमतिरहितंधिग ततनुःत्रिकोणस्थ सोन्मादंरवितनयः करोतिपुरुषं सदादीनंकन्यायांमिथुनेवास्थितगुरुविलोकितदिन नाथ जनितमहोन्माददोषोपशांतयेगुरुप्रीतयेप्रा गुक्तंजपहोमदानादिकुर्यात् तथाच कर्कटांशास्थित शुक्रजनितपानादिदोषापनुत्त्यैशुक्रप्रीतयेप्रागुक्त मेवजपादिकंकुर्यात् वृषकर्कमेषवर्यमन्यत्रराशिस्थ क्षीणचंद्रजनितोन्मत्तत्वदोषोपशांतयेपूर्वोक्तंचंद्रप्रीत येजपहोमदानादिकंनिखिलमपिविदध्यात् तेनोपशां तिर्भवति अथोन्मादस्यकर्मविपाकमभिधत्ते तत्प्रती कारंच यदुक्तंपूर्वाचार्यैः मदगर्वाभ्यांपरस्वस्तेयीनिंदि तवस्तुभोगेच्छुःपरान्मोहयित्वावृद्धगुरूनामुपहासक श्च शास्त्रज्ञानेसतिनजानामीतिवंचकश्चउन्मतः प शेपदत्तज्ञानीयद्वाजायते एतदुमामहेश्वरसंवादेभिहि

तं मंत्रगुरूणामुपहासीचांद्रायनंकुर्यात् एतद्बौधायने
भिहितं सदस्पतिमितिहोमंचरुघृताभ्यांकुर्यात् कया
नश्चित्रइतिसूक्तंजपेत् हिरण्यंचमधुरद्रव्याणिदद्यात
एतद्ब्रह्मांडपुराणेभिहितं सारस्वतंमंत्रंवाजपेत् इत्यु
न्मादव्याधिप्रतीकारः तथापानात्ययस्यापि अथक्र
मप्रासस्यपानात्ययरोगस्यसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् येविषस्यगुणाः प्रोक्ता स्तेपिमद्येप्रति
ष्ठिताः तेनमिथ्योपयुक्तेनभवत्युग्रोमदात्ययः किंतुम
द्यंस्वभावेनयथैवान्नंतथास्मृतं अयुक्तियुक्तंरोगाययु-
क्तियुक्तंतथाऽमृतं प्राणाःप्राणभृतामन्नंतदयुक्त्यानिहं
त्यसून् विषंप्राणहरंतच्चयुक्तियुक्तंरसायन विधिना
मात्रयाकालेहितैरन्नैर्यथावलं प्रहृष्टोयःपिवेन्मद्यंत
स्यस्यादमृतोपमं स्निग्धैस्सदन्यैर्मांसैश्चभक्ष्यैश्चसहसे
वितंभवेदायुःप्रकर्षायवलायोपचयायचकाम्यतामन
सस्तुष्टिस्तेजोविक्रमएवच विधिवत्सेव्यमानेतुमद्येसन्नि
हितागुणाः क्रुद्धेनभीतेनपिपासितेनशोकाभितप्तेन
बुभुक्षितेनव्यायामभाराध्वपरिक्षतेनवेगावरोधाभिह
तेनचापि अत्यन्नभक्ष्यावततोदरेण,साजीर्णभुक्तेनतथा
वलेन उष्णाभितप्तेनचसेव्यमानंकरोतिमद्यंविविधान्
विकारान् सुश्रुतात् त्वक्पिप्पलीभुजगपुष्पयुतैरुपे
तं सेवेतहिंगुमरिचैलयुतंफलाम्लं उष्णांवुसैंधवयुतं

स्त्वथवाविडत्वक्च्यचेलहिंगुमगधाफलमूलसुंक्यः हृद्यै
फलैरपिचभोजनमत्रशस्तंद्राक्षाकपित्थफलदाडिम-
पानकंयत् तत्पानविभ्रमहरंमधुशर्करात्यामाम्रातको
लरसपानकमेवचापि मंथःखार्जूरमृद्वीकावृक्षाम्ला
म्लीकदाडिमैः परूषकैःसामलकैर्युक्तोमद्यविकारनुन्न
सतीनमुद्गमिश्रान्दाडिमामलकानितान् द्राक्षामल
कखर्जूरपरुषकरसेनवा कल्पयेत्तर्पणान्यूषान्रसां
श्चविविधात्मकान् यथाक्काथेनसंसिद्धंघृतंधातृरसेन
वासर्पिःकल्याणकंवापिमदमूर्छापहंपिबेत्योजयेन्मा
तुलुंगाम्लदाडिमैःपानकान्यपि स्निग्धाम्ललवणाम्लां
श्चरसान्जांगलजान्शुभान् पित्तेक्षौद्रसितायुक्तंमद्यं
मर्हेदकंपिबेत् पित्तपानात्ययेयोज्याःसर्वतश्चक्रियाइ
माः पानरोगेकफोद्भूतेलंघनंचयथाबलं दीपनीयोष
धोपेतंपिबेन्मद्यंसमाहितः त्रिफलायाःरसोवापिव्यो
षचूर्णसमन्वितः शुष्कमूलकजोयूषः कुलत्थोवामधू
त्कटः सर्वजेसर्वमेवेदंप्रयोक्तव्यंचिकित्सितं आभिः
क्रियाभिःसिद्धाभिःशांतिंयातिमदात्ययः नोचेन्मद्यंक्र
मंहित्वाक्षीरमस्यप्रयोजयेत् लंघनाद्यैःकफेक्षीणे
जातेदौर्बल्यलाघवे चव्यंसौवर्चलंहिंगुपूरकंविश्वदी
पकं चूर्णमद्येनपातव्यंपानात्ययरुजापहं इतिश्री
तोमरवंशावतंसारिपुभूलभैरवश्रीवीरसिंहविरचिते

वीरसिंहावलोकेग्रंथेज्योतिःशास्त्रकर्मविपाकायुर्वेदप्र
योगोपनाम्नयाधिकारः अथेदानींदाहरोगस्यगणित
ग्रंथाभिप्रायेणप्रकारमाचष्टे तत्प्रतीकारंच यथोक्तंजा-
तके तनौभवतिभूपुत्रोरंध्रेभवतिभास्करः जन्मकाले
यदायस्यसदाहज्वरवान्भवेत् मूर्तिस्थानस्थितस्यभू-
पुत्रस्यरंध्रस्थानगतस्यचभानोर्दाहपीडोपशमनार्थंत
त्प्रीतयेधेनुदानादिकंविधेयं मंगलप्रीतयेचपूर्वोक्तमेव
जपहोमदानादिकंकुर्यात् अथसर्वांगदाहरोगस्यकर्म
विपाकमाह तत्प्रतीकारंच अथकापिलग्रहे यःपुनः
अग्नौष्ठीवतितंकपिलनामाग्रहोगृण्हातिसः तत्क्षणा-
ज्ज्वरशूलीसर्वांगदाहीपीतनयनश्चभवति वलिंचनि
शिचतुष्पथेपिष्टलाजापिण्याकरुधिरतिलध्वजगंधपु
ष्पैःमंत्रेणदद्यात् प्रतिगृण्हीष्ववलिंचेमंकपिलाख्यम
हाग्रह आतुरस्यसुखंसिद्धिंप्रयच्छत्वंमहाफलं इति
मंत्रः अथक्रमप्राप्तस्यदाहरोगस्यसनिदानंचिकित्सि
तमाहरुग्विनिश्चयात् त्वचंप्राप्तःसमानोष्मापित्तरक्ता
भिमूर्छितः दाहंप्रकुरुतेघोरंपित्तवत्तत्रभेषजं वृंदसंग्र
हात् शतधौतघृताभ्यक्तंदद्यात्तुयवशक्तुभिः कोलाम
लकसंयुक्तैर्दाडिमाम्लैश्चबुद्धिमान् स्वेदयेत्तस्यसर्वां-
गमारणालार्द्रवाससा लामज्जेनाथयुक्तेनचंदनेनानुले
पयेत् चंदनांबुकणास्यंदितालवृंतोपवीजिते सुप्ता-

द्दाहार्दितोंभोजकदलीदलसंस्तरे परिषेकावगाहेषुव्य
जनानांचसेचने शस्यतेशिशिरंतोयंतृष्णादाहोपशांत
ये क्षारैश्चसुकषायैश्चसुशीतैश्चंदनान्वितैः अंतर्दाहंप्र
शमयेदेतैश्चान्यैश्चशीतलैः फलिनीलोध्रसेव्यास्लहेमप
त्रंकुठंनटं कालीयकरसोपेतंदाहेशस्तंप्रलेपनं ह्रीवेरप
द्मकोसीरचंदनोदकवारिणा संपूर्णामवगाहेतद्रोणींद
हार्दितोनरः पित्तज्वरहरंयच्चदाहेतत्सर्वमिष्यते वाप्यः
कमलहासिन्योजलयंत्रगृहाःशुभाः नार्यश्चंदनदिग्धां
ग्योदाहदैन्यहरामताः कुशादिशालिपर्णीभिर्जीवका-
द्येनसाधितं तैलंघृतंचदाहघ्नंवातपित्तविनाशनं कुशा
द्यंघृतंतैलंच इतिश्रीतोमरवंशावतंसरिपुभूतभैरव
श्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशा
स्त्रकर्मविपाकायुर्वेदप्रयोगोदाहाधिकारः अथक्रम
प्राप्तस्योन्मादरोगस्यसनिदानंचिकित्सितमाह रुग्वि
जिश्चयात् मदयंत्यु द्धतादोषायस्मादुन्मार्गमास्थिताः
मानसोयमतोव्याधिरुन्मादइतिकीर्तितः एकैकशः
सर्वशश्चदोषैरत्यर्थमूर्छितैः मानसेनचदुःखेनसपंचवि
धउच्यते विषाद्भवतिषष्ठश्चयथास्वंतत्रभेषजं सचप्रवृ
द्धस्तरुणोमदसंज्ञांबिभर्तिच विरुद्धदुष्टाशुचिभोजना
निप्रधर्षणंदेवगुरुद्विजानां उन्मादहेतुःभयहर्षपूर्वोम
नोभिघातोविषमाश्चचेष्टाः तैरल्पसत्वस्यमलाःप्रदुष्टा·

बुद्धेर्निवासंहृदयंप्रदूष्य श्रोतांस्यधिष्ठायमनोवहा
निप्रमोहयंत्याशुनरस्यचेतः धीविभ्रमःसत्वपरिप्लव
श्चपर्याकुलादृष्टिरधीरताच अवद्धवाक्त्वंहृदयंचशून्यं
सामान्यमुन्मादगदस्यलिंगं चौरैर्नरेंद्रपुरुषैरारिभिस्त
थान्यैर्वित्रासितस्यधनबांधवसंक्षयाद्वागाढक्षतेमनसि
चप्रियायारिरंसोर्जायतेचोत्कटतरोमनसोविकारः हृं
दसंग्रहात् वातिकेस्नेहपानंचप्राग्विरेक श्चपित्तजे क
फजेनावनंकार्यपरोवस्त्यादिकःक्रमः अथोपदेक्ष्यतेकिं
चिदपस्मारचिकित्सिते उन्मादेतत्रकर्तव्यंसामान्याद्दो
षदूष्ययोः सिद्धार्थकोहिंगुवचाकरंजोदेवदारुच मंजि
ष्ठात्रिफलाश्वेतकटभीचकटुत्रिकं समांसानिप्रियंगु
श्चसिरीषोरजनीद्वयं वस्तमूत्रेणपिष्टोयमगदःपानमं
जनं नस्यमालेपनंचैवस्नानमुद्धर्त्तनंतथा अपस्मार
विषोन्मादकृत्यालक्ष्मीज्वरापहं भूतेभ्यश्चभयंहंतिरा
जद्वारेप्रशस्यते सर्पिरेतेनसिद्धंवागोमूत्रेणतदर्थकृत्
दशमूलांबुसघृतंयुक्तंमांसरसेनवा ससिद्धार्थकचूर्णं
वाकेवलंवानवंघृतं उन्मादशांतयेपेयोरसोवातालशा
खजः प्रयोज्यंसार्षपंतैलंनस्याभ्यंजनयोःसदा आश्वा
सयेत्सुहृद्वांतैर्वाक्यैर्धर्मार्थसंहितैः ब्रूयादिष्टविना
शंवादर्शयेदद्भुतानिच बद्धंसर्षपतैलाक्तमुत्तानंचातपे
न्यसेत् कपिकच्छ्वाथवातप्तैर्लोहैस्तैलजलैःस्पृशेत्

कशाभिस्ताडयित्वाचसुबद्धंविजनेगृहे रुध्याच्चेतोहि
विभ्रांतंतथाव्रजतितत्सुखं सर्प्पेणोद्धृतदंष्ट्रेणदांतैःसिं
हैर्गजैश्चतं त्रासयेच्छस्त्रहस्तैश्चशत्रुभिःस्वकरैस्तथा
अथवाराजपुरुषैर्बहिर्नीत्वासुसंयतं त्रासयेयुर्वधैरेनंन
र्पयंतोनृपाज्ञया सततंधूपयेच्चैनंश्वनो मांसैश्चपूतिभिः
बुध्वादोषंचयःसात्म्यंदेशकालबलाबलं चिकित्सितमि
दंकुर्यादुन्मादेभूतदोषजे महर्षिपितृगंधर्वैरुन्मादस्य
चबुद्धिमान् वर्जयेदंजनादीनितीक्ष्णानिक्रूरमेवच अ
पस्मारक्रियांचापिमहोद्दिष्टांचकारयेत् कुष्टाश्वगंधेलव
णाजमोदेद्वेजीरकेत्रीणिपटूनिपाग मांगल्यपुष्पीचस
माणिचूर्णंकृत्वाचचूर्णेनवचोद्भवेन तुल्येनयुक्तंबहु
शोरसेनतद्भावितंब्रह्मविनिर्मितायाः सर्पिर्मधुभ्यांचत
तोक्षमात्रंलिह्यान्नरःसप्तदिनंहिताशी ऐश्वर्यमिछ
न्मनसश्चधैर्यमेधांतदिछन्द्विगुणंचकालं पठेन्नरः
श्लोकसहस्रमेकंतद्वाप्रयोज्यद्विगुणंचकालं सारस्व
तमिदंचूर्णंब्रह्मणानिर्मितंस्वयं जगद्धितायलोकानां
दुर्मेधानामचेतसां अथक्रमप्राप्तस्यज्योतिःशास्त्रा
नुसारेणापुत्रतामाह सुतस्थानगतोदुष्टग्रहोभवति
तदाअपुत्रताभवति जातके सुतभवनगते सौरिभौम
राहौतथापिदृष्टोस्मिन्मन्दस्तनवत नरास्युःनिगदि
तलल्लोवराहमिहिरश्चतदुपशांतयेपूर्वजपहोमादिकं

दानंचकुर्यात् अपुत्रताकर्मविपाकमाह यःपूर्वजन्म
निमासोपवासिनीभूत्वान्यांबावंध्याचउदिकाद्दाति-
सोनपत्योभवति महाभारते औषधदानाजंतुःप्रसूति
प्रतिबंधकोवंध्यः परमेश्वरशरणःसप्ताह्नआदिष्टितंपुत्रं
विष्णोररराटमसीति मंत्रेणाष्टोत्तरशतंघृतचरुभ्यांजु
हुयात् सगरुडंविष्णुप्रतिमापलसुवर्णेनकुर्यात्दिव्य
वस्त्रेणवेष्टयेत् द्रोणधान्येस्योपरिस्थापयेत् श्रुतशी
लायकुटुंबिनेदद्यात् अनेनमंत्रेण नंदगोपकुलोद्धार
यशोदानंदवर्द्धन देहिमेतनयंविष्णोत्वामहंशरणंगतः
ऋत्विग्भ्योदक्षिणांसंपूर्णां अवश्यंतस्यसुपुत्रोभव
ति परमेश्वर प्रसादात् अधुनाज्योतिःशास्त्रानुसारे
णअमोर्पत्वहेतुंतत्प्रतीकारंचदर्शयति यदुक्तंबृहज्जात
के जायागते ऽर्कपुत्रेतुभौमेराहौतथैवदृष्टेत्रसभवति
जायाहीनोमर्त्योजन्मनिभवद्धिस्येवं इतिमहाभा
रते कुमारिकाभोजनंचकारयेत् तथाचब्राह्मणेष्ट-
भोजनंदद्यात् तदुपशमनार्थंपूर्वोक्तप्रकारेणजपहोम
दानादिकंकार्यं तदाअजायोजायांलभते मृतजायोजा
यांदीर्घायुषींप्राप्नोतिस्वरूपांच अयुतंजपः अष्टोत्तर
सहस्रंहोमः इदानीमभार्यत्वहेतुंकर्मविपाकंतत्प्रतीकारं
चाहयः पूर्वजन्मनिपरदारापहारी भातिसमृतभार्योऽभा
र्योदारघातीभवति तदुपशांतयेभवानीसहस्रनाम्न

क्ष्मीसूक्तंचापाठयेत् गायत्र्यष्टोत्तरायुतेनघृतपायसा-
भ्यांहोमंकारयेत् भवानीप्रतिमांसुवर्णमयींकुर्यात् पलेन
तदर्धार्द्धेनवा सुवस्त्रेणवेष्टयित्वासवाहनांदद्यात् वित्त
शाठ्यंनकुर्यात् कुलीनायसुशांतायस्वधर्माय कुटुंबिने
अभ्यर्च्यतंपूजयित्वादद्यान्ममर्यातुमां सालंकारांसवस्त्रां-
चप्राप्नुयाद्दीर्घजीवितंपुनः जटिलापूतनाकेशीचारटीमर्क
टीवचात्रायमाणाजयावीराचोरकःकटुरोहिणी काय
स्थासूकरीछत्रसातिछत्रापलंकषामहापुरूषदंताचवय
स्थानकुलीद्वयं कटंभीवृश्चिकालीचसास्थिरापिचतैर्घृ
तं सिद्धंचतुर्थकोन्मादग्रहापस्मारनाशनं महापैशाचि
कंनामघृतमेतद्यथामृतं मेधाबुद्धिस्मृतिकरं बालानांच
विवर्द्धनं महापैशाचकंघृतं त्रिफलालक्ष्मणानंतासमं
गासारिवाचवा ब्राह्मीपाठाद्विवृहतीद्विस्थिराद्विपुनर्नवा
सहदेवासूर्यवल्लीवयस्थागिरिकर्णिका तोयकुंभेपचेदेतस्य
लांशंपादशेषितं नतकौंतीवचाकुष्टंकृष्णासर्षपसैंधवैः
नीरक्तचूर्णवत्सायाःसंसिद्धंपयसाचगोः पुष्ययोगोद्धृ
तंप्रस्थंस्वहेमकलशेस्थितं पानाभ्यंजनतोमेधास्मृत्या
युःपुष्टिवर्द्धनं रक्षोघ्नंचविषघ्नंचसारस्वतमिदंघृतंसारस्व
तंघृतं श्यामामधुरसारास्नादशमूलंशतावरी स्वदंष्ट्रा
सवमूलंचतैर्युक्ताक्काथकल्कितैः साधितंचैतसंनामघृतं
चित्तविकारनुत् उन्मादमदमूर्छायांज्वरापस्मारभेषजं

वेतसंघृतं हिंगुमूत्रंचवस्तस्यधूममस्यप्रयोजयेत् एतेनशा
म्यतिक्षिप्रंबलवान पियोग्रहः शिरीषपुष्पंलसुनंसुंठीसि
द्धार्थकंवचा मंजिष्टारजनीकृष्णावस्तमूत्रेणपेषयेत् व
त्यश्छायाविशष्कास्ताससपित्तानंयनांजनं कर्पासास्थिम
यूरपिच्छवृहतीनि माल्यपिंडीतकंत्वग्मांसीविषातिंदुकंतु
षवचाकेशाहिनिर्मोचनैः नागेंद्राद्विजश्रृंगहिंगुमरिचैस्तु
ल्यंकृतंधूपकंकंठोन्मादपिशाचराक्षससुरावेशग्रहघ्नंपरं
महाधूपवरः कल्याणकंप्रयुंजीतमहन्ना वेतसंघृतं तैलंना
रायणंवापिमहन्नारायणंतथा अथचरकात् कल्याण
महाकल्याणघृते विशालात्रिफलाकौंतीदेवदावेलवालु
कं स्थिरानंताह्वारिद्रेद्वेसारिवेद्वेप्रियंगुका नीलोत्पलैला
मंजिष्ठांदतीदाडिमकेसरं तालीसपत्रंवृहतीमालतीकु
सुमंनतं विडंगंपृष्टिपर्णीचकुष्टंचंदनपद्मकैः एतैःक
षसमैःकल्कैर्विंशत्याष्टभिरेवच जलेचतुर्गुणेपक्वाघृ
तप्रस्थंप्रयोजयेत् अपस्मारेज्वरेकासेशोषेमंदानले
क्षये वातरक्तेप्रतिश्यायेतृतीयकचतुर्थके वम्यर्शो
मूत्रकृच्छ्रेचविसर्पोपहतेषुच कंडूपासामयोन्मादवि
षमेषुगदेषुच भूतोप हतचित्तानांगद्गदानामचेतसां
शस्तंस्त्रीणांचवंध्यानांधन्यमायुर्बलप्रदं अलक्ष्मी
पापरोगघ्नंसर्वग्रहनिवारणं कल्याणकमिदंसर्पिःश्रे
ष्टंपुंसवनेषुच कल्याणकंघृतं इतिश्रीतोमरवंशावतं

सारिपुभूत भैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहा
वलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगःउन्मा
दाधिकारः अथेदानीमपस्माररोगस्यजातकाभिप्राये
णहेतुंतत्प्रतीकारंचाह यथोक्तंजातकेशनिभूसूनुदिन
नाथानिधनस्थायस्यजन्मकालेस्युः नानाव्याधिवधा
दैःपीडाऽपस्मारसंभवातस्य अष्टमस्थानस्थशनिमं
गलसूर्यजनितापस्माररोगप्रतीकारार्थनत्तद्ग्रहप्रीतये
पूर्वोक्तमेवसकलंजपहोमदानस्नानादिकुर्यात् तेनोप
शाम्यति अथअपस्माररोगस्यकर्मविपाकप्रकारमा
चष्टे तत्प्रतीकारंच अथापस्माररोगे स्वामिनोगुरो
श्चहंताप्रतिकूलोवाअपस्मारीजायते अस्यप्रायश्चि
त्तंचांद्रायणंकुर्यात् सदसस्पतिमद्भुतमित्यनेनमंत्रे
णचरुघृताभ्यांजुहुयात् देवब्राह्मणान्संपूज्यनमस्कु
र्यात् हिरण्यंदद्यात् कयानश्चित्रआभुवदितिसू
क्तंजपेत् यथाहबौधायनः ब्राम्हणस्वासरोधेनत्वप
स्मारीभवेन्नरः वक्ष्येतस्यप्रतीकारंदानहोमक्रिया
दिभिः पलेनवातदर्द्धेन तदर्द्धार्द्धेनवापुनः विनायक
प्रतिकुर्यात्स्वर्णवर्णेनचशोभनां स्रजंतंचतथानाग
सुपर्वातंप्रकल्पयेत् पुष्करपद्मरागेनहस्तंरत्नैःप्रक
ल्पयेत् विनायकार्द्धमानेनमुखंदेवस्यकल्पयेत् त
स्याग्रेप्रदेयानिरत्नानिविविधानिच माणिक्येनप्र

कुर्वीतचक्षुषीतस्यशोभने पूर्वेद्युर्मंडपंकुर्यात्स्तंभ
षोडशभिर्दृढं यद्वाद्वादशभिःकुर्यादष्टाभिश्चप्रयत्नतः मंडप
स्यचतुर्भागंवेदिकांपरिकल्पयेत् रात्रौविनायकस्यापि
त्वधिवासनमिष्यते चतुर्भिर्ब्राह्मणैःसार्द्धमाचार्यःसर्व
शास्त्रवित् स्वयमेवतदाचार्यैर्धर्मज्ञः सत्यवान्शुचिः
कुलीनोन्नवृद्धश्चसर्वप्राणिहितेरतः रात्रौजागरणंकृत्वा
मध्यरात्रेबलिंहरेत् मत्स्यमांसेन तंदद्यात्तथाक्षीरोदनेन
च आचार्यःप्रयतोभूत्वामंत्रेणानेनसंयतः पूर्वस्यांदि
शितंदद्याद्बलिंवैसर्वकामिकं आदित्यावसवोरुद्रादेवा-
भूतानिवासवः सर्प्पाःपिशाचाःशाकिन्योडाकिन्यःपांथ
देवताः अपस्माराधिदेवंचवेतालानैऋतास्तथा बलि
दानेनदत्तेनशांतिंकुर्वंतुसर्वशः बलिदानमंत्रः ततःप्रभा
तेविमलेस्नात्वाचाहतवाससः भूषिताःकटकैःसम्यगुप
वीतांगुलीयकैः कुंडानिदिक्षुचत्वारिमेखलासंवृतानिच
कुर्युस्तेषुपृथक्तेषुहोममंत्रैःश्वकैस्तदा पूर्वस्मिन्बह्वृचः
कुर्यात्समिदाज्यचरूत्करं विनायकंसमुद्दिश्यगणानांत्वे
तिमंत्रतः तत्पुरुषायविद्महेवक्रतुंडायधीमहितन्नोदंती
प्रचोदयात् अध्वर्युर्दक्षिणेकुंडेकुर्याद्धोमंसमाहितः छं
दोगःपश्चिमेचापितद्दैवत्येनहोमयेत् अथर्वणश्चोत्तरेच
कुंडेहोमंप्रकल्पयेत् विनायकायदेवायसर्वभूतहितायच
गणानामधिपत्येप्रयुक्तायहुंफट्स्वास्तिस्वधानमःस्वाहा

समिदाज्यचरुं हुत्वापूर्वंहुतंतमेवहि आचार्यः प्रति
मांतांचब्राह्मणैःसहसंयतः आसनंवेदिकामध्येवितानादि
सुशोभने तिलानामुपरिस्थाप्यगंधपुष्पैःप्रपूजयेत्
वस्त्रैःनानाविधैः सुभ्रैःकर्पूरकटकादिभिः उपचारैःषोड
शभिर्नैवेद्यंचैवमोदकाः यथादेवेतथाचार्येप्यलंकारादि
कल्पयेत् आचार्यःपरयाभक्त्यागणेशायप्रकल्पयेत्
आपूपादितथान्यच्चकारयेद्भक्षकादिकं निवेद्यपार्वतीं-
चापिदेवदेवंमहेश्वरं पूजयेत्परयाभक्त्याआचार्यःस्वय
मेवहि तथैवरोगवामस्त्र्यासंपूज्यगणनायकं गणानां
त्वेतिमंत्रेणतूष्णींशूद्रस्तुपूजयेत् ततोमध्यंदिनेमासेप्रति
मांदक्षिणायुतां मंत्रेणानेनदद्याच्चसरोगीप्राङ्मुखःस्वयं
उदङ्मुखोपविष्टायब्राह्मणायातिभक्तितः विनायकप्रप-
न्नार्तिहरविघ्नविनायक त्वंदेवैःप्रार्थितःपूर्वंविघ्नविघ्नप-
रायणैः ब्राह्मणश्वासरोधेनयज्जातंममवैकृतं पूर्वकर्मवि
पाकेनह्यपस्मारोन्मदादिकं जाड्यंवाप्यथवाधिर्यंना-
शिकारोधभाषणं त्वदर्चायाप्रदानेनरोगमाशुविनाशय
दानमंत्रः चतुर्णांब्राह्मणानांचयथाशक्त्यानदक्षिणा
एवंकृत्वागणपतेर्दानंमर्त्यःसुखीभवेत् इत्यपस्मारह
रणविधिः अथक्रमप्राप्तस्यअपस्माररोगस्यसनिदा
नंचिकित्सितमाह रुग्विनिश्चयात् तमःप्रवेशसंरंभ-
दोषोद्रेकहृतस्मृतिः अपस्मारइतिज्ञेयोगदोघोरश्च

तुर्विधःत्हृत्कंपःशून्यतास्वेदोध्यानमूर्छाप्रमूढता निद्रा
नाशश्चतस्मिंश्चभविष्यतिभवंत्यथ चिंताशोकादिभि
र्दोषाःकुद्धाहृत्स्त्रोतसिस्थिताः कृत्वास्मृतेरपभ्रंसमप-
स्मारंप्रकुर्वते वातात्पित्तात्कफात्सर्वैर्दोषैःस्स्याच्चतुर्विधः
तमसोदर्शनंध्यानंत्हृत्कंपोनेत्रवैकृत भ्रमोत्हृदयशून्यत्वं
भाविनस्तस्यलक्षणं पक्षाद्वाद्वादशाहाद्वामासाद्वाकुपि
तामलाः अपस्मारायकुर्वंतिवेगंकिंचित्तथांतरे वातिकं
वस्तिभिःप्रायःपैत्तिकंतुविरेचनैः कफजंवमनैर्धीमान
पस्मारमुपाचरेत् निर्गुंडीसंभवंदारुतान्नेतस्योपयोग
तः उपैतिसहसानाशमपस्मारोमहागदः मनोह्वातार्क्ष्य
जंचैवशकृत्पारावतस्यच अंजनं हंत्यपस्मारमुन्मादंच
विशेषतः श्वशृगालविडालानांकपीनांगृध्रयोरपि पित्तानि
नस्यतोदद्यादपस्मृतिनिवृत्तये षष्ठीहिंगुवचावाह्या
शिरीषलसुनामजे साजमूत्रमपस्मारे सोन्मादेनावनां
जनं कपित्थाशारदंमुद्गांमुस्तोशीरयवांस्तथा सव्यो
षांवस्तमूत्रेणपिष्टावर्तिंप्रकल्पयेत् अपस्मारेतथो-
न्मादेसर्पदष्टेगरार्दिते पुष्योद्धृतंशुनःपित्तमपस्मार-
घ्नमंजनात् तदेवसर्पिषायुक्तंधूपनंपरमंस्मृतं आभिः
क्रियाभिःशुद्धाभिर्हृदयंसंप्रबुध्यते स्रोतांसिचास्य
शुध्यंतिस्मृतिंसंज्ञांचविंदति नकुलोलूकमार्जारगृ
ध्रकीटादिकाकजैः तुंडैःपक्षैःपुरीषैश्चधूपनंकारये-

द्भिषक् गोमूत्रसिद्धार्थकसिग्रुपर्णैरुद्वर्तनंतैरथवाप्रलेपः पूतिश्चयोमत्स्यकृतेनधूपोनस्यंचतीक्ष्णैरवबोधनार्थं मूलं वर्तिशिखाजं गोघृतलीढंनरस्यमासेननिःशेषयत्यपस्मृतिमितिसिद्धंनात्रसंदेहः यःखादेत्क्षीरभक्ताशीमाक्षिकेन वचारजः अपस्मारंमहाघोरंसचिरोत्थंजयेद्ध्रुवं कल्याणकारकात् भार्गीकषा यपुतमायसचूर्णमेतद्दिक्षोर्विकारकृतसन्मधुरंसुगंधिकुंभेनिधायनिहितंबहुधान्यपल्लेप स्मारमाशुविनिहंत्यसकृन्निपीतं शुद्धसूतंद्विधागंधं खल्वेकृत्वातुकज्जलीम् द्वयोस्तुल्यंवलाचूर्णंमधुनासह भक्षयेत् निष्कमात्ररसोह्येषदुग्धभक्तप्रयोगतः अपस्मारंमहाघोरंचिरकालानुवंधिनम् मासमात्रान्निहं-त्येषनात्रकार्याविचारणा इतितोमरवंशावतंसारिपुभूतभैरवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगः अपस्माराधिकारः अथेदानींवातव्याधिनिदानंज्योतिःशास्त्रेणप्रतीकारंव्याख्यास्यामः यदुक्तंजातके अतिमारुतरोगार्त्तःपरस्वहारीविरोममतिचेष्टः कर्कटकस्थेभानौस्वपुत्रदृष्टेपुमान्मिशुनः अन्यच्च वातपित्तोद्भवापीडाहीनजैःसहविग्रहः विदेशगमनंवापिसौरेमध्योयदाशिखी कर्कटस्थितस्वपुत्रदृष्टसूर्यजनितवातव्याधिप्रतीकारमाह तच्छांतयेपूर्वोक्तमेवजपहोमदा-

नादिसकलमेवविधिवद्विदध्यात् अन्यच्च शनैश्चरम
ध्यवर्त्तिकेतुजनितवातोद्भवपीडोपशांतयेकेतुप्रीतयेजप
होमादिकंकुर्यात् केतुकृण्वन्निितिमंत्रेणजपः तिलाज्य
कुशसमिद्भिर्जुहुयात् ससुवर्णछागंदद्यात् शनेरि
व असिततिलांजनेत्यादिभिरौषधैस्नायात् राजावर्त्त
परिधानंविदध्यात् वातव्याधिगृहीतंलोकेदुष्टंप्रवासशी
लंवा क्षुद्रंनिंदितशीलंजनयतिभौमेक्षितःसौरः भौ
मेक्षितशनिजनितवातव्याध्युपशमनायशनिप्रीतयेपू
र्वोक्तंजपहोमादिकंकुर्यात् अथवातव्याधेः कर्मविपाक
माह तत्प्रतीकारंच गुरुंभर्त्स्यर्थीवातरोगीशन्नोदेवीति
मंत्रेणजपंकुर्वीत इतिउमामहेश्वरसंवादेभिधानात्
अन्यच्च वातरोगकारणांतरंप्रकृत्यंतरंचोच्यते देव
ब्राह्मणस्वापहरणात्स्वामिद्रोहात्वातरोगीभवति अ
स्यप्रायश्चित्तं कृच्छ्रातिकृच्छ्रचांद्रायणंकुर्यात् अग्निर
श्मीत्यृचंजपेत् अनेनमंत्रेणहोमंकुर्यात् वातआवात
मंत्रोयजप्यतेयुतसंख्यया अग्निरश्मीत्यृचंवापिजपे-
द्वाजुहुयादपीतिवाचस्पतिवचनं विश्वस्तस्यविषंदत्वा
अभक्ष्यभक्षीवावासोहिरण्यंदद्यात् अन्यायपदावादी
सनरः पादघातीयःपुनःरक्षत्तयोनिसमृगदानंस्वर्ण
चदद्यात् एकांतरपक्षःसर्वविधिआचरणंब्राह्मणंनाव
लोकयेत् यःपुन रक्षतयोनिमनिछतींपरस्त्रियंबलादा

कर्म्योपभुक्तेसर्वसंधिषुधनुर्वातरोगोवाविषमज्वरी
वातीस्रपीडावान्भवतितदुपशांतयेप्रतिरूपदानंमहिषी
दानं कृछ्रातिकृच्छ्रचांद्रायणानिकुर्यात् उद्यंतघोत्यृचं
जपेत् तदुक्तं ब्रह्मांडपुराणे अपमृत्युप्रशांत्यर्थंप्रति
रूपंद्विजोत्तमे प्रदद्यान्महिषींकृष्णांसवत्सांपूजयेत्ततः
सहस्रनामस्तोत्रंवासर्ववारत्रयंजपेत् मृत्युरोगशांत्य
र्थमानसः इतिमहाभारतवचनात् नामत्रयंजपेत्
नामत्रयंछंदऋषिदेवताः प्रदृश्यंतेऽग्निगायत्रीपुरुष-
प्रकृतिस्कृतलंछंदांसिवसिष्टकश्यपनारदत्राषयःमहा
विष्णुर्महानृसिंहोमहावराहश्चदेवता इतिसर्वरोग
शांतये सुतत्रयंजपेत् अच्युतानंदगोविंदेत्येत-
न्नामत्रयंद्विजः अयुतत्रयसंख्यांकंजपंकुर्याद्विशां
तये इतिशंकरगीतासुवचनात् पुरुषसूक्तंजपंकु
र्यात् ततःपापक्षयाद्रोगमोक्षोभवत्येव इतिधनुर्वात
रोगे अन्यच्च वायुपुराणेवातव्याधियुतस्तेयोस्याह-
बौधायनोमुनिः हरिणंकारयेत्ताम्रंधेनुंतुदशभिः
पलैः तदर्द्धेनतदर्द्धेनशृंगरूप्यमयेहदे तंदुलोपरि
संस्थाप्यब्राह्मणायनिवेदयेत् हाटकत्रतयंवापितद
र्द्धवास्वशक्तितः चतुष्पादेषुसंस्थाप्यकांस्यपात्रच
तुष्टयं वायुदेवतमंत्रैश्चहोमंतत्रप्रकल्पयेत् समिदा
ज्यचरुंकृत्वाशतमष्टोत्तरंद्विजः अष्टाविंशातिरेवाथ

दानमंत्रेणकारयेत् वायोचरसिभूतानामंतस्त्वंलोकपा
वनः वाहनस्यप्रदानेनवातव्याधिंविनाशय अनेन
कृतमात्रेणयथोक्तेनविधानतः वातव्याधिविनिर्मुक्तो
नीरोगःसुखमश्नुते इतिवातव्याधिहरोमृगदानविधिः
अथक्रमप्राप्तस्यवातव्याधेःसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् रुक्षशीताल्पलघ्वन्नव्यवायातिप्रजा
गरैः विषमादुपचाराच्चदोषासृक्स्रावणादति लंघन
प्लवनात्यर्थव्यायाममतिचेष्टितैः धातूनांसंक्षयाच्चिंताशो
करोगादिकर्षणात् वेगसंधारणायासादभिघातादभोजना
त् मर्मवाधागजोष्ट्राश्वशीघ्रयानापतर्पणात् देहेस्रोतांसि
रिक्तानिपूरयित्वानिलोबली करोतिविविधान्व्याधीन्सर्वां
गैकांगसंश्रयान् अव्यक्तंलक्षणंतेषांपूर्वरूपमितिस्मृतं
आत्मरूपंतुयद्व्यक्तमायासोलघुतापुनः संकोचःपर्व
णांस्तंभोभंगोस्थ्नांपर्वणामपि लोमहर्षप्रलापश्चपारि
पृष्टशिरोग्रहः खांज्यपांगुल्यकुब्जत्वंशोषोंगानामनि
द्रता गर्भशुक्ररजोनाशःस्पंदनंगात्रसुप्तता शिरोना
शाक्षिजत्रूणांग्रीवायाश्चापिभंजनं भेदस्तोदार्तिराक्षेपो
मोहश्चायासएवच एवंविधानिरूपाणिकरोतिकुपितो-
निलः हेतुस्थानविशेषाच्चभवेद्रोगविशेषकृत् तत्रको
ष्ठाश्रितेदुष्टेनिग्रहोमूत्रवर्च्चसोः वर्ध्मंहृद्रोगगुल्मार्शः
पार्श्वशूलंचमारुते सर्वांगकुपितेवातेगात्रस्फुरणभंजनं

वेदनाभिः परीताश्चस्फुटंतीवचसंधयः ग्रहोविण्मूत्रवा
तानांशूलाध्मानाश्मशर्कराः जंघोरुत्रिकहत्पृष्ठरोगशो
थागुदेस्थिते रुक्पार्श्वोदरहृन्नाभितृष्णोद्गारविशूचि
काः कासःकंपश्चशोषश्चश्वासश्चामाशयस्थिते पक्का
शयस्थेंत्रकूजंशूलाटोपौकरोतिवा कृच्छ्रमूत्रपुरीषत्वमा
नाहंत्रिकवेदनां श्रोत्रादिष्विंद्रियवधंकुर्यात्क्रुद्धःसमीर
णः वृंदसंग्रहात् अभ्यंगःस्वेदनंवस्तिर्नस्यंस्नेहंविरेच
नं स्निग्धाम्ललवणंस्वादुवृष्यंवातामयापहं पटोलफल
कैर्यूषोवृष्योवातहरोलघुः वास्त्वालककृतोयूषःपरंवातवि
नाशनः पंचमूलीवलासिद्धंक्षीरंवातामयापहं शीतोष्ण
स्निग्धरूक्षाद्यैर्वातजोयोनशाम्यति विकारस्तत्रविज्ञे
योविषमोवातशोणितः वाजिगंधावलासिद्धर्दशमूलीम
होषधं हंगृध्रनक्षीराष्यावगणोमारुतनाशनः अनूप
मत्स्यामिषवेशवारैरुष्णैःप्रदेहःपवनापहःस्यात् स्नेहै
श्चतुर्भिर्दशमूलसिद्धैःप्रागेषवैश्वानिलहाप्रदेहः निरस्थि
पिशितंपिष्टंस्विन्नंगुडघृतान्वितं कृष्णामरिचसंयुक्तंवे
सवारइतिस्मृतः काकोल्यादिःसवातघ्नासर्वाम्लद्रव्यसं
युतः सानूपौदकमांसस्तुसर्वस्नेहसमायुतः सुखोष्णः
सर्वलवणःसाल्वणःपरिकीर्तितः तेनोपनाहंकुर्वीतसर्व
दावातरोगिणां काकोल्यादिर्गणोग्राह्योत्यष्टवर्गक
संज्ञकः वातघ्नोभद्रदार्व्यादिर्वर्गोम्लोदाडिमादिकः सर्व

लेहश्चतुस्नेहोलवणंसैंधवादिकं अम्लादिभिश्चसंस्का
र्यकाकोल्यादित्रयंत्रिभिः आमाशयगतेवातेछर्दिताय
यथाक्रमं देयःषड्धरणोयोगःसप्तरात्रंसुरवांबुना चित्रकं
द्र्यवापाठाकटुकातिविषाक्षया· महाव्याधिप्रशमनोयोगः
षड्धरणःस्मृतः कर्षोष्टदशभिःपादैर्धरणंत्र्यधिकैस्तुतैः
तेनषड्धरणोयोगःसप्तरात्रंप्रयुज्यते पक्वाशयगतेवातेका
र्यस्नेहविरेचनं वस्तयःसोधनीयाश्चप्राशाश्चलवणोत्तराः
कार्योवस्तिगतेवातेविधिर्वस्तिविशोधनः श्रोत्रादिषुप्रकु
पितेकार्यश्चानिलहाविधिः स्नेहोभ्यंगोपनाहश्चमर्दना
लेपनानिच त्वग्मांसासृक्शिराप्राप्तेकुर्याच्चासृग्विमोक्षणं
स्वेदोपनाहाग्निकर्मबंधनोन्मर्दनानिचस्नायुसंध्यस्थिसं
प्राप्तेकुर्याद्वातेविचक्षणः निरूढेस्थिगतेवायौमणिमंथे
नदारिते नाडींदत्वास्थिनिभिषकूकर्षयेत्सवनंवली व
क्षस्त्रिकस्कंधगतंवायुंमन्यागतंतथा वमनंहंतिनस्यंच
कुशलेनप्रयोजितं माषवलाशूकशिंवीकत्तृणरास्नाश्व
गंधोरुकाणां क्काथोनस्यानिपीतोरामठलवणान्वितःको
ष्णः अपनयतिपक्षघातंमन्यास्तंभंसकर्णनादरुजं
दुर्जयमर्दितवातंसप्ताहाज्जयतिचावश्यं हिंगुसैंधव
संयुक्तंपक्षवातनिवारणं पलमर्द्धपलंचापिरसोनस्य-
सुकुट्टितं हिंगुजीरकसिंधूत्थैःसौवर्चलकटुत्रिकैः चू
र्णितैर्माक्षिकैर्मानैरवलोड्यविचूर्णितैः यथाग्निभक्षितं

भातरुवुक्काथानुपानतः दिनेदिनेप्रयोक्तव्यंमासमेकंनिरं
तरं वातरोगंनिहंत्याशुअर्दितंचापतंत्रकं एकांगरोगिणे
चैवतथासर्वांगरोगिणे उरूस्तंभंचगृध्रस्यांक्रमिदोषंवि
शेषतः कटीपृष्टामयंहन्याज्जठरंचविशेषतः सहरिद्रावच
चाकुष्टंपिप्पलीविश्वभेषजं अजाजीचाजमोदश्चयष्टीम
धुकसैंधवं एतानिसमभागानिश्लक्ष्णंचूर्णानिकारयेत्
तच्चूर्णंसर्पिषालोड्यप्रत्यहंभक्षयेन्नरः एकविंशतिरात्रेण
भवेच्छ्रुतिधरोनरः मेघदुंदुभिनिर्घोषोमत्तकोकिलनिःस्वनः
जडगद्गदमूकत्वंलेहःकल्याणकोजयेत् कल्याणकलेहः
तैलंघृतंचार्द्रकमातुलुंगरसंसचक्रंसगुडंपिवेद्यः कट्यूरुपृ
ष्टत्रिकगुल्मशूलगृध्रस्युदावर्त्तहरःप्रदिष्टः कुंकुमंचंदनंप
त्रमुशीरंकुमुदोत्पलैः गोरोचनाहरिद्रेद्वेमंजिष्टामधुयष्टि
काः सारिवारोध्रपतगंकुष्टंगैरिककेशरे स्वर्णक्षीरीप्रियंगु
श्चकालीयंरक्तचंदनं एभिरक्षसमैर्भागैस्तैलप्रस्थंविपाच
येत् अभ्यंगोराजपत्नीनांयेचान्येधनिनोनराः तिलकान्पि
डकान्व्यंगान्नीलिकान्मुखदूषकान् कार्श्यंचापिशरीर
स्यदुश्छायांचविवर्णतांनाशयित्वासुजनयेद्रूपंचापिमनो
हरंपद्मकेशरवर्णाभंमुखंभवतिकांतिमत् कुंकुमाद्यंते
लं बलाशतकषायेतुतैलस्याढ्ढकंपचेत् कल्कैर्मधुक
मंजिष्टाचंदनोत्पलपद्मकैः सूक्ष्मैलापिप्पलीकुष्टत्वगे
लागरुकेशरैः गंधैश्चजीवनीयैश्चक्षीराढकसमायुतं ए

तन्मृद्वग्निनापक्वंस्थापयेद्राजनेशुभे सर्ववातविकारां
श्चसर्वधात्वंनराश्रयान् तैलमेतत्प्रशमयेच्छिन्नाभ्राणीव
मारुतः वलातैलमहेंद्रार्हमेतज्ज्वरविकारनुत् वातव्या-
धौवलतैलं वलामूलकषायस्यदशमूलीकृतस्यच य
वकोलकुलत्थानांक्काथस्यपयसस्तथा अष्टावष्टौशुभा
भागास्तैलादेकंतदेकतः पचेदावाप्यमधुरंगणसैंधवसं
युतं तथाऽगुरुंसर्जरसंसरलंदेवदारुंच मंजिष्टचंदनं
कुष्टमेलाकालानुसारिवा मांसीशैलेयकंपत्रंतगरंसारि
वावचां शतावरीमश्वगंधांशतपुष्पांपुनर्नवां तत्साधु
सिद्धंसौवर्णेराजतेमृन्मयेपिवा प्रक्षिप्यकलशेसम्य
क्सुगुप्तंतंनिधापयेत् वलातैलमिदंख्यातंसर्ववातवि-
कारनत् यथाबलचतोमात्रांसूतिकायैप्रदापयेत् याच
गर्भार्थिनीनारीक्षीणशुक्रश्चयःपुमान् धातुक्षीणेमर्म
हतेमथितेभिहतेतथा भग्नेश्रमाभिपन्नेचसर्वथैवोप
युज्यते एतदाक्षेपकादीन्वैवातव्याधीन्व्यपोहति हि-
क्कांश्वासमधीमंथंगुल्मंकासंचदुस्तरं षण्मासानुपयो
ज्य तदंत्रवृद्धिंव्यपोहति प्रत्यग्रंधातुपुरुषोभवेच्चस्थिर
यौवनः राज्ञामेतद्धिकर्त्तव्यंराजमान्याश्चयेनराः सुखि
नःसुकुमाराश्चधनिनश्चापियेनराः वलातैलं विल्वा-
ग्निमंथस्योनाकःपाटलापरिभद्रकः प्रसारिण्यश्वगंधा
चबृहतीकंटकारिका वलाचातिवलाचैवश्वदंष्ट्रास्वपुनर्न्न

गा एषांदशपलान्भागांश्चतुर्द्रोणेंभसःपचेत् पादशे षंपरिस्राव्यतैलपात्रंप्रदापयेत् शतपुष्पादेवदारुमांसी शैलेयकंवचा चंदनंतगरंकुष्टमेलापर्णीचतुष्टयं रास्ना तुरंगगंधाचसैंधवंसपुनर्न्नवा एषांद्विपलिकान्भागान्पे षयित्वाविनिःक्षिपेत् शतावरीरसंचैवतैलतुल्यंप्रदापये त् आजंवायदिवागव्यंक्षीरंदद्याच्चतुर्गुणं पानेवस्तौत थाभ्यंगेभोज्येनस्येप्रशस्यते अश्वोवावातसंभग्नोगजो वायदिवानरः पंगुलःपीठसर्पीचतैलेनानेनासिद्ध्यति अधोभागेचयेवातशिरोमध्यगताश्चये दंतशूलेहनुस्तं भेमन्यास्तंभेहनुग्रहे एकांगंशुष्यतेयस्यगतिर्यस्यच विव्हला क्षीणेंद्रियानष्टशुक्राः ज्वरक्षीणाश्चयेनराः वधिरालल्लजिव्हाश्चमधःमेधासएवच मंदप्रजाचयाः नारीयाचगर्भंनविंदति वातार्त्तावृषणौयेषामंत्रवृद्धि श्चदारुणा एततैलवरंतेषांनाम्नानारायणंस्मृतं इति नारायणतैलं समूलपत्रमुत्पाट्यशरत्कालेप्रसारिणिं कु ट्टयित्वापलशतंकटाहेसमधिश्रयेत् वारिद्रोणसमा युक्तंचतुर्भागावशेषितं कषायसममात्रंतुतैलमत्रप्रदा पयेत् दध्नस्तत्राढकंदद्याद्द्विगुणंचाम्लकांजिकं भेष जानितुपेष्याणितत्रेमानिसमापचेत् शुंठीपलानिपं चैवराश्नायाश्चपलद्वयं यवक्षारपलेद्वेचसैंधवस्यपल द्वयं एतत्सर्वंसमालोड्यशनैर्मृद्वग्निनापचेत् एतदभ्यं

जनेश्रेष्टंनश्यकर्मणिशस्यते पानेवस्तौचदातव्यंनस्
चिस्पतिषिध्यते अशीतिंवातरोगानांतैलमेतदपोहति
गृध्रसीमस्थिभंगंचमंदाग्नित्वंचनाशयेत् अपस्मारम
थोन्मादंविद्रधिमंदगामितां स्वग्गताश्चापियेवाताःशि
रासंधिगताश्चये जानुसंधिगताश्चैवपादपृष्टगतास्तथा
अश्वंवावातसंभग्नंनरंवाजर्ज्जरीकृतं प्रसारणीतैलमि
दंवलमांसविवर्द्धनं धन्यंप्रजाकरंश्रेष्टंवृद्धकालेचसेवितं
पंगुलःपीठसर्पीचपीत्वातत्संप्रधावति स्थिरीकरणसेत
द्विवलीपलितनाशनं इंद्रियानांवलकरंवर्णोदार्यकरंतथा
भेडाह्वातव्याधौप्रसारणीतैलं वलाश्वगंधावृहतीश्वदं
ष्ट्रास्योनाकवाट्यालकपारिभद्राः क्षुद्राकपिल्लाग्निवला
ग्निमंथाराष्णारणीकःकपिकच्छुराच निर्गुंडिकैरंडकुरं
टकानांमूलानिचैषांसरणीसुतानि मूलंविदध्यादथपा
टलानांसंकुट्यपादंविधिनोद्धृतानां द्रोणैरपामष्टभि
रेवपक्वापादावशेषेणरसेनतेन तैलाढकाभ्यांसमदुग्ध
मत्रसाजंनिदध्यादथवापिगव्यं दद्याद्रसंचैवशतावरी-
णांतैलेनतुल्यंपुनरेवतत्र पत्काद्दिनैकंकृतवस्त्रपूतंक
ल्कानिचैषांहिसमावपेत रास्नाश्वगंधामिसिदारुकुष्टं
पर्णीतुरुष्कागुरुकेसराणि सिंधूत्थमांसीरजनीद्वयंच
शैलेयकंचंदनपुष्कराणि एलासयष्टीतुरगाव्हपत्रंभृं
गाष्टवर्गंचवचापलाशं वृश्चीवथौणेयकचोरकाख्यं

मूर्वावचाकटफलपद्मकंच मृणालजातीफलकेतकी
चसनागपुष्पंसरलंमुराच जीवंतिकाचंदनकमुसीरं
दुरालभावानरिकानखंच कैवर्तिकंतालशिरःसतिक्तं
खर्ज्जूरमुस्तंसमभागमेषां एतैःसमेत्सार्द्धपलप्रमाणो
भोगानथाष्टौखलुकालमेध्यं एणंकुरंगोहरिणोसपूरो-
गोधाशशूःशल्लकचक्रवाको वर्त्तरिलावोवशतित्तिरीचस
सारसःक्रौंचककंबुवर्णः आजाःसकूर्माइहमांसयूषःक्र
माक्षिपेच्चात्रयथैवलाभं रोहीतकापासवनेत्रनामाकंसी
ठकोंमद्गुरभृंगिकौच पाठीनकालीयकतोणिकाचसशेष
राजेकुरशद्यश्च एषांचयूषःक्रमलब्धएवतेलेनयो-
ज्योविधिवद्विधिज्ञैः कृताम्रपात्रेवरमृत्तिकेचकर्पूरका
श्मीरमृगांडजानां दद्यात्सुगंधायवदंतिकेचित्प्रस्वेददो
र्गंध्यविनाशनाय वदंतिकोचेद्भिषजासमेतंशुभेतिथावृ
क्षमुहूर्तलग्ने संतोष्यविप्रानूभिषजोर्थिनश्चस्कभाज
नेयत्नधृतंतथैव पानेचनस्येचनिरूहणेचभोज्येप्र-
योज्यंततएवनूनं अभ्यंगमादौचसदाप्रशस्तंनिवा
र्यतेकर्मस्कंकेषुनैव उन्मादशोषेक्षतरक्तपित्तेश्वास
भ्रमप्लीहविछर्दनानि कासाग्निवातांहतदंतशूलकु
मीन्समूर्छाननतोददाह सतालुशूलंश्रवणाक्षिशूलं
वाधिर्यमेवज्वरपीडितंच मंद्रेंद्रियत्वंचतथाग्निमांद्यं-
प्रनष्टशुक्रत्वमथांगकंडूं निहंतिसर्वस्वगुणप्रभावा

नूर्कादियहायस्मृतिगृध्रसींच मन्याहनुस्तंभनपक्षवातंस
र्वांगकंपंरसनाग्रहंच शिरोगतानूसंधिगतांश्चवातानधोग
तानूर्द्धगतांस्तथैव मांसास्थिमज्जागतवातरोगानाक्षेपकं
चैवशिरोविकारान् तथांत्रशूलंवृषणार्तिमुग्रांवातोद्भवान्
सर्वगतांश्चरोगान् श्लेष्मोद्भवांद्वंद्वजमिश्रितांश्चएकांगजा
तंगतिविव्हलांच शिरश्चलंमिन्मिनगद्गदांश्चपंगुः खरवंज-
स्त्वथपीठसर्वाप्नष्टशुक्रोवलबुद्धिहीनान् सिद्धांतितैले
नानियोजितेननिदाघदग्धप्रतानूद्रुमांश्च वंध्यानारील
भतेसुपुत्रंपराक्रमैर्विष्णुसमानरूपं पुण्योच्छ्रितिराज्यच
लोपयुक्तंविंद्यात्सुबुद्धिवरमंत्रवर्णं विधिप्रयुक्तंक्रमलिप्त
देहः नारायणोनामततःप्रसिद्धं नारायणोक्तंचमहाप्रभा
वं इतिमहानारायणतैलं तैलंसंकुचितेभ्यंगेमाषसैं
धवसाधितं बाहुशीर्षगतेनस्यंपानंचोपरिभाक्तिकं माष
तैलं माषात्मगुप्तातिरसोरुबूकरास्नाशताव्हैर्लवणैःसुपि
ष्टैः चतुर्गुणेमाषवलाकषायेतैलंकृतं हंतिविपक्षघातान्
माषतैलं माषक्काथेवलाक्काथेरास्नायादशमूलजे य
वकोलकुलत्थानांछागमांसरसेपृथक् प्रस्थंतैलस्यचप्र
स्थंक्षीरंदद्याच्चतुर्गुणं रास्नात्मगुप्तासिंधूत्थशताव्हैरंड
मुस्तकैः जीवनीयवलाव्योषैःपचेदक्षसमैर्भिषक् हस्त
कंपेशिरःकंपेबाहुकंपेऽपबाहुके वस्त्यभ्यंजनपानेषुना
वनेचप्रयोजयेत् माषतैलमिदंश्रेष्ठमूर्द्धजत्रुगदापहं ए

हन्माषतैलं केनकिमूलबलातिबलानांयङ्कहलेनजलेन
विपक्कं तैलमनल्पतुषोदकसिद्धमाहृतमस्थिगतांश्चनिहं
ति केतक्यादितैलं रास्नामृतैरंडसुराह्वविभंतुल्यंपुरेणा
थविमृद्यखादेत् वातामयीकर्णशिरोगदी चनाडीयुतश्चै
वभगंदरीच रास्नाद्योगुग्गुलः त्रिकटुत्रिफलामुस्तंविडंगंच
व्यचित्रके वचैलापिप्पलीमूलंहपुषासुरदारुच तुंबुरुपौ
ष्करंकुष्टंविषाचरजनीद्वयं बाष्पिकाजीरकंशुंठीपत्रंच
सुदुरालभं विडंसौवर्चलंक्षारौसैंधवंहस्तिपिप्पली भागा
नेतान्समान्कृत्वातुल्यंदत्वाचगुग्गुलं नदावदरमात्रेणगुटि
कांकारयेद्बुधः तांभक्षयेत्तुमेधावी मधुनासहयोजितां आ
नाहंचतथोन्मादंकुष्टानिगुदजानिच शोफप्लीहामयंमेहं
कामलामपचींतथा नाम्नाद्वात्रिंशकोह्येषगुग्गुलुःकथि
तोमहान् धन्वंतरिकृतोयोगःसर्वरोगतिषूदनः द्वात्रिंश-
कोगुग्गुलुः इतिश्रीतोमरवंशावतंसरिपुभूतभैरवश्री
वीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रक
र्मविपाकायुर्वेदप्रयोगः वातव्याध्यधिकारः अथज्यो
तिःशास्त्राभिप्रायेणवातरक्तदोषस्यकारणमाह व्योम
स्थानेमहीपुत्रःशनिदृष्टोयदाभवेत् जन्मकालेयस्यजंतोः
सवातरुधिरार्दितः इतिवचनात् व्योमस्थानस्थित-
शनिदृष्टभौमजनितवातरक्तदोषोपशांतयेमंगलप्रीतये
पूर्वोक्तमेवजपहोमदानादिकंकुर्यात् अथवातरक्तरोगे

कर्मविपाकहेतुमाह वातरक्तरोगेयथाहबौधायनः सव र्णागमनोवातरक्तवान्भवति अस्यप्रायश्चित्तं चांद्राय णद्वयंकुर्यात् अथदानं लक्ष्मीनारायणंरूपंसुवर्णेन प्रकल्पयेत् पलेनवातदर्द्धेनतदर्धेनाथवापुनः लक्ष्मीना रायणंरूपंसर्वदासर्वकामदं पद्मासनगतंकुर्यादेवदेवंच- तुर्भुजं दक्षिणधःकरेपद्मंशंखमूर्द्धकरेन्यसेत् वामार्धेच भवेच्चक्रंलक्ष्मीपृष्टेकरंशुभं वामोत्संगगतादेवीरत्नपत्रग तोभवेत् दक्षिणश्चभुजोदेव्याःपृष्टेदेवस्यचक्रिणः गरुडं राजतंकुर्यादेवदेवस्यवाहनं पक्षौचतस्यसौवर्णौसुवर्णे नेत्रनासिका वस्त्रैरत्यंतरुचिरैःपरिधाप्यातिकौतुकं मु क्तादामपरिक्षिप्तंचंदनागरुलेपनं अर्च्चयेत्कुसुमैर्युग्मं लक्ष्मीनारायणात्मकं प्रसन्नंरमणीयंचगरुडस्योपरि- स्थितं ततोविप्रंसमाहूयसुशीलंलक्षणान्वितं आचार वंतंधर्मज्ञंवेदवेदांगपारगं प्रतिग्रहनिवृत्तंचश्रुतिस्मृतिपथे स्थितं स्वयंभक्त्यासमानीयपूजयेद्वस्त्रकुंडलैः कुंकुमागरु कर्पूरैःरुचिरैरंगुलीयकैः पूर्वोक्तेनविधानेनहोमंतत्रतुकार येत् मंत्रेणानेनतंदद्यात्सर्वलोकनमस्कृतं लक्ष्मीपतेदेव कीनंदनेशक्षीराब्धिशायिन्वचसामगम्य गोविंददामोदर वातरक्तंविनाशयाशुक्षपितारिवर्ग लक्ष्मीनारायणस्यै वमूर्तिंदद्यात्सुभक्तितः अरोगवान्सुखीनित्यंजायतेना त्रसंशयः इतिवातरक्तेलक्ष्मीनारायणदानविधिः अ

थक्रमप्रामस्यवानरक्तस्यसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् उत्तानमवगाढंचद्विविधंवातशोणितं
त्वग्मांसाश्रयमुत्तानंगंभीरंत्वंतराश्रयं लवणाम्लकटु-
क्षारस्निग्धोष्णाजीर्णभोजनैः क्लिन्नशुष्कांबुजानूपमां
सपिण्याकमूलकैः कुलत्थमाषनिष्पावशाकादिपललेक्षु
भिः दध्यारनालसौवीरशुक्ततक्रसुरासवैः विरुद्धाध्य
सनक्रोधैः दिवास्वप्नप्रजागरैः प्रायसःसुकुमाराणांमि-
थ्याहारविहारिणां स्थूलानांसुखिनांचापिकुप्यतेवातशो
णितं हस्त्यश्वोष्ट्रैर्गच्छश्चाश्नतश्चविदाह्यन्नंसंविदाह्यश
नस्यकृत्स्नंरक्तंविदहत्याशुतच्चदुष्टंसूक्ष्मंपादयोश्चीयतेच
तत्संयुक्तंवायुनादूषितेनतत्प्राबल्यादुच्यतेवातरक्तं स्वेदो
त्यर्थंतथाकार्श्वंस्पर्शज्ञत्वंक्षतेतिरुक्. संधिशैथिल्यमा
लस्यंस्यंदनंपिडकोद्गमः जानुजंघोरुकट्यंशहस्तपादां
गसंधिषु निस्तोदःस्फुरणंभेदोगुरुत्वंसुप्तिरेवचकंडूः सं
धिषुरुग्दाहोभूत्वानश्यतिवासकृत् वैवर्ण्यंमंडलोत्प
त्तिर्वातासृक्पूर्वलक्षणं अथवृंदसंग्रहात् वातशोणि
तिनोरक्तंस्निग्धस्यबहुशोहरेत् अल्पाल्पंरक्षयेद्वायुं
यथादोषंयथाबलं दिवास्वप्नंससंतापंव्यायामंमैथुनंत
था कटूष्णंगुर्वभिष्यंदिलवणाम्लंचवर्जयेत् पुराणा
यवगोधूमानीवाराःशालिषष्टिकाः आढक्यश्चणकामुद्गा
मसूराःसमकुष्टकाः सूपार्थेबहुसर्पिष्काःप्रशस्तावातशोणि

ते वासागुडूचीचतुरंगुलानामेरंडतैलेनपिबेत्कषायं क्रमे
णसर्वांगजमप्यशेषंजपेदसृग्वातभवंविकारं गुडूच्याः
स्वरसंकल्कंचूर्णंक्काथमेवच प्रभूतकालमासेव्यमुच्यते
वातशोणितं अमृतानागरधान्यककर्षत्रितयेनपाचनं
सिद्धं जयतिसरक्तंवातंमासंकुष्टान्यशेषेण वत्सादन्यु
द्भवःक्काथःपीतोगुग्गुलमिश्रितः समीरणसमायुक्तंशो
णितंसंप्रणाशयेत् तिस्रोथवापंचगुडेनपथ्याजग्ध्वापि
वेच्छिन्नरुहाकषायं तद्वातरक्तंशमयत्युदीर्णमाजानुभि
न्नच्युतमप्यवश्यं सारिवासर्ज्जमंजिष्ठायष्टीसिक्थैः
पयोन्वितैः तैलंपक्कामयोक्तव्यंपिंडाख्यंवातशोणिते
पिंडतैलं वनमहिषलोचनोदरसन्निभवर्णस्यगुग्गुलोः
प्रस्थं प्रक्षिप्यतोयराशौत्रिफलाममृतांयथोक्तपरिमा
णां संसाधयेत्सयत्नाद्दर्व्यासंघट्टयेच्चतद्यावत् अर्द्धक्ष
पितंजातंतोयंज्वलनस्यसंपर्कात् अवतार्यवस्त्रपूतंपुन
रपिसंसाधयेदपः पात्रेसांद्रीभूतेतस्मिन्नवतार्यहिमोप
लस्पर्शे पथ्याचूर्णार्द्धपलंत्रिकटुकचूर्णंषडक्षपरिमाणं
कृमिरिपुचूर्णार्द्धपलंकर्षंकर्षंत्रिवृद्दंत्योः पलमेकंछिन्नरुह
दत्वासंमूर्छयेद्यत्नेन संस्थापयेच्चगुप्तंस्निग्धेभांडेघृतेन
सुरभीणां आदायतस्यमात्रांविहितातिथिदेवताप्रणतिः
खादेद्यथाग्निमनुजोव्याधिबलापेक्षयासम्यक् इष्टाहार
विहारोभेषजकालाश्चसर्वेस्युः तनुरोधिवातशोणितमे

कद्विरुल्बणाचिरोत्थमपिच भग्नस्तुलपरिशफ्ष्कंस्फुटि
तमपिनिहंतियत्नेन व्रणकासकुष्टगुल्मश्वयथूदरपांडु
रोगमेदांसि मंदाग्नित्वंविबंधप्रमेहदोषांश्चनाशयंति स
ततंनिषेव्यमानंकालेननिहंतिदोषगणं अभिभूयजर
दोषंकरोतिकैशोरकंरूपं,कैशोरकोगुग्गुलुः भूनिंबावुद
निंबवत्सककणाव्रायनंनंतामृतातिक्ताभीरुफलत्रिक
प्रतिविषामूर्वाविशालाजलैः पाठापर्प्पटसारिवाह्वयानि
शायुग्मयष्टिकापद्मकैः सोसीरैःसपटोलचंदनवचासम्या
कसप्तछदैः इत्येभिर्गदितैर्जलाष्टगुणितंप्रस्थंपचेत्सर्पि
षः गव्यस्यामलकीरसद्विगुणितंनाम्नामहातिक्तकं इ
त्येतद्धलगंडमंडलरुजःकंडूसपांड्वामयंशोफश्लीपदवा
तरक्तविकृतीःकुष्टानिचाष्टादश तिक्तकघृतं मंजिष्टा
कुटजामृताघनवचाशुंठीहरिद्राद्वयं क्षुद्रारिष्टपटोलप
त्रकटुकाभार्गीविडंगाग्निकं मूर्वादारुकलिंगभृंगम
गधात्रायंतिपाठावरीगायत्रीत्रिफलाकिरातकमहानिं
वासनारग्वधां श्यामावल्गुजचंदनंवरुणकंपूतीकसा
स्फोटकं वासापर्पटसारिवाप्रतिविषानंताविशालाज
लं मंजिष्टादिममुंकषायविधिनानित्यंपुमान्यः
पिबेत् त्वग्दोषाअचिरेणयांतिविलयंकुष्टानिचाष्टा-
दश वातरक्तेप्रसुप्तोचविसर्प्पेविद्रधौतथा सर्वेषुवा
तरोगेषुमंजिष्टादिःप्रशस्यते मंजिष्टादिक्काथः इ

तिश्रीतोमरवंशावतंससरिपुभूतभैरवश्रीवीरसिंहदेवविरचितेवीरसिंहावलोकेग्रंथेज्योतिःशास्त्र - - - - कर्मविपाकायुर्वेदप्रयोगोवातरक्ताधिकारः अथेदानींऊरुस्तंभामवातयोः सामान्यदोषदूष्यत्वात् ज्योतिःशास्त्राभिप्रायेणहेतुमाह तत्प्रतीकारंच यदुक्तंजातके अष्टमगोगुरुरामकृत्तोरेतिवचनात् अष्टमस्थानस्यगुरुजनितामवातरोगोपशांतयेतत्प्रीतयेपूर्वोक्तमेवहोमपूजादानादिकंकुर्यात् तेनोपशाम्यति ऊरुस्तंभआमवातोपसृष्टस्यकर्मविपाकमाह हुताग्निनिर्वापक आमवातवानितिस्मरणात् तदुक्तदोषोपशांतयेऽयुतसंख्याको गायत्र्याजपस्तिलैराज्येनचहोमः सुवर्णान्नदानं यत्रयत्रचसंकीर्णमात्मानंमन्यतेद्विजः तत्रतत्रतिलैर्होमोगायत्र्याश्चजपस्तथेतिस्मरणात् अथक्रमप्राप्तस्योरुस्तंभरोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः जीर्णाजीर्णैस्तथायाससंक्षोभस्वप्नजागरैः सश्लेष्ममेदःपवनःसाममत्यर्थसंचितः अभिभूयेतरंदोषमूरुचेत्प्रतिपद्यते सक्थ्यस्थीनिप्रपूर्यांतः श्लेष्मणास्तिमितेनच तदास्तभ्नातितेनोरूस्तब्धौशीतावचेतनौ परकीयाविवगुरूस्यातामतिभृशव्यथौ यस्यात्कफप्रशमनंतच्चमारुतकोपनं तत्सर्वदा

कार्यमुरुस्तंभस्यभेषजं सर्वौषधक्रमः कार्योतत्रादौ
कफनाशनं पश्चाद्वातविनाशायकृत्स्नःकार्यःक्रियाक्र
मः क्षौद्रशर्षपवल्मीकमृत्तिकासंयुतंभिषक् गाढमाछा
दनंकुर्याद् रूस्तंभेसवेदने त्रिफलाचव्यकटुकाग्रंथि
कंमधुनालिहेत् ऊरुस्तंभविनाशायपुरंमूत्रेणवापि-
बेत् लिह्याद्वात्रिफलाचूर्णक्षौद्रेणकटुकायुतं तत्सु
खांबुपिवेद्वापिचूर्णषड रणं नरः पिप्पलीवर्द्धमा
नंवामाक्षिकेनगुडेनवा ऊरुस्तंभेप्रशंसंतिगंडारा
रिष्टमेवच सैंधवाद्यंहितंतैलममृताख्योपिगुग्गुलः
इत्यूरुस्तंभाधिकारः अथामवातरोगस्यनिदा
नंसचिकित्सितमाह रुग्विनिश्चयात् विरुद्धाहारचे
ष्टस्यमंदाग्नेर्निश्चलस्यच स्निग्धंभुक्तवतोह्यन्नं
व्यायामंकुर्वतस्तथा वायुनाप्रेरितोह्यामःश्लेष्म-
स्थानंप्रधावति तेनात्यर्थंविदग्धोसौधमनीःप्रतिपद्य
ते धातूनामाश्रयोह्येषआमसंज्ञोतिदारुणः युग
पत्कुपितंवेतोत्रिकसंधिप्रवेशकौ स्तब्धंच कुरुते
गात्रमामवातःसउच्यते वृंदसंग्रहात् लंघनंस्वेद
नंतिक्तंदीपनानिकटूनिच विरेचनंस्नेहपानंवस्तय
श्चाममारुते रूक्षस्वेदोविधातव्योवालुकापुटकैस्त
था उपनाहाश्चकर्त्तव्यास्तेपिस्नेहविवर्ज्जिता सठी
सुंठ्यभयाचोग्रादेवदारुद्दषामृता कषायमामवातस्य

पाचनंरूक्षभोजनं चित्रकंकटुकापाठाकलिंगातिविषा मृताः देवदारुवचामुस्तनागरातिविषाभयाः पिवेदुष्णांबु नानित्यमामवातस्यभेषजं रास्नागुडूचीमेरंडदेवदारुम हौषधं पिवेत्सर्वांगगेवातेसामेसंध्यस्थिमज्जगे रास्ना पंचकं रास्नामृतारग्वधदेवदारुत्रिकंटकैरंडपुनर्नवा नां क्वाथंपिवेन्नागरचूर्णमिश्रंजंघोरुपृष्टत्रिकपार्श्वशू ली शुंठीगोक्षुरकःक्वाथःप्रातःप्रातर्निषेवितः आमवा तेकटीशूलेपाचनोरुक्प्रणाशनः दशमूलीकषायेणपिबे द्वानागरांभसा कुक्षिवस्तिकटीशूलेतैलमेरंडसंभवं पलंशतंरसोनस्यतिलस्यकुडवंतथा हिंगुत्रिकटुकंक्षारौ द्वौपंचलवणानिच शतपुष्पातथाकुष्टंपिप्पलीमूलचि त्रकं अजमोदाजवानीचधान्यकंचापिबुद्धिमान् प्रत्ये कंचपलंचैषांसूक्ष्मचूर्णानिकारयेत् घृतभांडेदृढेचैव स्थापयेद्दिनषोडशं प्रक्षिप्यतैलमानीचप्रस्थार्द्धकांजिक स्यच खादेत्कर्षप्रमाणंतुतोयंमद्यंपिवेदनु आमवाते तथावातेसर्वांगैकांगसंस्थिते अपस्मारेनलेमंदेकास श्वासगरेषुच उन्मादेवातभग्नेचशूलेजंतुषुशस्यते रसोनपिंडः पिप्पलीपिप्पलीमूलंचव्यचित्रकनागरैः पाठाविडंगेंद्रयवौर्हिंगुभार्गीवचान्वितैः सर्षपातिवि षाजाजीरेणुकाकृष्णजीरकैः गजकृष्णाजमोदाचमू र्वाकटुकमिश्रितैः समभागैःकृतैरेतैस्त्रिफलाद्विगु

णाभवेत् त्रिफलासहितैः सर्वैः समोदेयस्तुगुग्गुलः
एतच्चूर्णीकृतंसर्वंमधुनाचपरिप्लुतं योगराजमिमंविद्वा
न्भक्षयेत्प्रातरुत्थितः अर्शांसिवातगुल्मंचपांडुरोग
मरोचकं नाभिशूलमुदावर्त्तान्प्रमेहान्वातशोणितान्
कुष्ठंक्षयमपस्मारंहृद्रोगंग्रहणीगदं महांतमग्निसादं
चकासंश्वासंभगंदरं रेतोदोषाश्चयेपुंसांयोनिदोषाश्च
योषितां निहन्यादाशुतान्सर्वान्दुर्निवारान्नसंशयः
एषनिःपरिहारस्तुपानभोजनमैथुने सतताभ्यासयोगे-
नवलीपलितनाशनः इतियोगराजोगुग्गुलुः अमृ
तायाकषायेणकल्केनचमहौषधं मृद्वग्निनाघृतंसिद्धं
वातरक्तहरंपरं आमवाताढ्यवातादीन्कृमिदुष्टव्रणा
नपि अर्शांसिगुल्मांश्चतथानाशयेदाशुयोजितं इ
तिगुडूचीघृतं इतिश्रीतोमरवंशावतंसारिपुभूलभै
रवश्रीवीरसिंहदेवविरचितेग्रंथेवीरसिंहावलोकेज्यो
तिःशास्त्रकर्मविपाकायुर्वेदप्रयोग आमवाताधिकारः
अथभूलरोगस्यज्योतिःशास्त्राभिप्रायेणहेतुंप्रतीकारं
चव्याख्यास्यामः भूलाढ्किलशरीरंमातुरनार्थावहं-
प्रियंदक्षं क्षितितनयवीक्षिततज्नुर्जनयातिचंद्रोनरंकुली
रगृहे अन्यत्र शिरसोरुग्गलरोगंश्वित्रंसहसाज्वरं
शूलं तपनदशायांशुक्रेदेशत्यागोभवेदरिभिः कर्कोश
स्थितभूसुतावलोकिताष्टमस्थानस्थितचंद्रजनितशू

लशांतयेपूर्वोक्तमेवचंद्रप्रीतयेसकलमपिकुर्यात् किंचत
पनदशायांशक्रजनितशूलोपशांतयेशक्रप्रीतयेप्रागुक्त
मेवजपहोमदानादिकंकुर्यात् अथशूलरोगस्यकर्मविपा
कमाह याचितारमकिंचनंब्राह्मणंश्रुताध्ययनसंपन्ना
तिशांतायाञ्चायायोनप्रयच्छतिसजठरशूलरोगवान्भवति
सकृच्छ्रातिकृच्छ्रचांद्रायणानिकुर्यात् वस्त्राणिदद्यात् यथा
विभवंब्राह्मणभोजनंहिरण्यंचदद्यात् योमातापितृभ्यां-
प्रवृत्तंमैथुनंशृणोतिसकर्णशूलीभवति पश्चाद्बधिरः किं·
चिदेवशृणोतिवातद्विष्णोरिति अष्टोत्तरायुतंजपेत् पुरु
षसूक्तंवा अपामार्जनस्तोत्रादिभिर्मंत्रितंजलंपिवेत् शू
लेनशूलीभवति मनुष्याणांचहिंसकः पलेनाथतदर्द्धेन
तदर्द्धार्द्धेनवाकृतं सौवर्णंराजतंवापिशूलंकुर्यात्स्वयत्नतः
ताम्रेणवायसावापिखादिरेणापिशक्तितः रक्तवस्त्रेणसं
वेष्ट्यतिलानामुपरिन्यसेत् तिलानांतुपरिमाणंद्रोणंवापि
तदर्द्धकं तदर्द्धंवायथाशक्त्यापूजयेद्ब्राह्मणंशचिः अर्घा
दिशूलमंत्रेण षोडशेचोपचारकृत् क्रियांचिद्ब्राह्मणपूजां
कृत्वाहोमंप्रकल्पयेत् शूलस्यदक्षिणेपार्श्वेस्थंडिलेग्निः
प्रणीयते समिदाज्यतिलान्हुत्वापुरुषएवेतिमंत्रितः
त्र्यंवकेणाज्यहोमंचविद्वांस्तत्रप्रकल्पयेत् यतइंद्रभया
महइतिइंद्रेनवतिलान्सुनः ततःशांतिंप्रकल्पयेत् तेनोद
केनवासिंचेत्तु शूलिनंरोगिणंनरं ततोहुतवतेशूलंसंप्र

ज्येवस्वशक्तितः दद्यात्सदक्षिणंतंतुप्राङ्मुखायउदङ्मु-
खः मंत्रेणानेनपरयाभक्त्यासर्वहरिंस्मरेत् त्वंशूलब्रम्ह
णासृष्टंत्वंपुरत्रयनाशनं दैत्यानांदानवानांचशंकरस्यायु
धंतथा कुक्षिस्थमथपार्श्वस्थमथवापृष्टसंगतं शूलंविना-
शयत्वंमेमहादेवेनधारित दानमंत्र ततःस्नात्वातुभुंजीत
ब्राह्मणैर्बहुभिःसह शूलहिंसांसमुत्पन्नांवेदनामाशुना
शय इतिशूलरोगहरःत्रिशूलविधिः अथक्रमप्राप्तस्य
शूलरोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात्
दोषैःपृथक्समस्तामद्वंद्वैः शूलोष्टधाभवेत् सर्वेष्वेतेषु
शूलेषुप्रायेणपवनःप्रभुः व्यायामयानादतिमैथुनाच्चप्र
जागराच्छीतजलातिपानात् कलायमुद्गाढकिकोरदूषा
दत्यर्थरूक्षाध्यशनाभिघातात् कषायतिक्तातिविरूढ-
जान्नविरुद्धवल्लूरकशुष्कशाकात् विट्शुक्रमूत्रानिल
वेगरोधात्शोकोपवासादतिहास्यभाष्यात् वायुःप्रवृद्धो
जनयेद्धिशूलंहृत्पार्श्वपृष्ठत्रिकवस्तिदेशे जीर्णेप्रदोषेचघ
नागमेचशीतेचकोपंसमुपैतिगाढं अथवृंदसंग्रहात् व
मनंलंघनंस्वेदःपाचनंफलवर्त्तयः क्षारश्चूर्णानिगुटिका
शस्यंतेशूलशांतये १ आशुकारीहिपवनस्तस्मात्तंपरि
पाचयेत् वातस्यानुजयेत्पित्तंपित्तस्यानुजयेत्कफं २
ज्ञात्वातुवातशूलंहिस्नेहस्वेदैरुपाचरेत् पायसैःशर्करा
पिंडैःस्निग्धैर्वासिकतोत्करैः ३ तस्यशूलाभिपन्नस्यस्वे

दएवसुखावहः वातात्मकंहृत्यचिरेणशूलंस्नेहेनयुक्त-
स्तुकुलत्थयूषः ससैंधवव्योषयुतःसलावःसहिंगुसौ
वर्चलदाडिमाढ्यः ४ तुंवरुन्यभयाहिंगुपौष्करंलव
णत्रयं पिवेदुष्णांबुनावापिशूलगुल्मापतंत्रके ५ वि
श्वमेरंडतैलंवाक्काथयित्वाजलंपिवेत् हिंगुसौवर्च्चलो
पेतसद्यःशूलनिवारणं ६ हिंगुपुष्करमूलाभ्यांहिंगुसौ
वर्चलेनवा विश्वैरंडयवक्काथःसद्यःशूलनिवारणः ७
गुडशालियवःक्षीरंसर्पिःपानंविरेचनं जांगलानिचमां
सानिभेषजंपित्तशूलिनः ८ वामयेत्पित्तशूलार्त्तंपटो
लेक्षुरसादिभिः पश्चाद्विरेचयेसम्यक्पित्तहृद्भिर्वि-
रेचनैः ९ शीतावगाह्याःपुलिनाःसवाताःभांडानिकांश्या
निजलप्लुतानि अन्यानिशस्तानिचशीतलानितोये
नशूलोपरिनिक्षिपेच्च १ विरेचनंपित्तहरंचशस्तंरसा
श्चशस्ताशशलावकानां संतर्पणंलाजमधूपपन्नंयो
गाःसुशीतामधुसंप्रयुक्ताः शतावरीक्षुरयष्याह्वचा-
रुधालकुशगोक्षुरैः सृतंशीतंपिवेत्तोयंसगुडक्षौद्रश
र्करं पित्तासृक्दाहशूलघ्नंसद्योयहज्वरापहं धा-
त्र्यारसंविदार्यावात्रायंतीगोस्तनांबुना पिवेत्सशर्क
रंसद्यःपित्तशूलनिषूदनं लवणत्रयसंयुक्तंकफशूलह
रंपरं मातुलिंगरसोवापिसिग्रुक्काथस्तथापरः सक्षा
रोमधुनापीतःपार्श्वहृत्वस्तिशूलनुत् श्लेष्मशूलहरा

पेयापंचकोलेनसाधिता विदारीदाडिमरसःसव्योषो लवणान्वितः क्षौद्रयुक्तोपहंत्याशूशूलंदोषत्रयोद्भवं एरंडबिल्वबृहतीद्वयमातुलिंगपाषाणभिन्त्रिकटुमूलकृतःकषायः सक्षारहिंगुलवणोरुबुतैलमिश्रःश्रोण्यूरुमेद्रहृदयस्तनरुक्षुपेयः एरंडसप्तकं हिंगुसौवर्चलंपाठाद्वौक्षारौलवणत्रयं चूर्णीकृत्यप्रदातव्यंभेषजंलसुनेनच हृतशूलेपार्श्वशूलेचमन्यास्तंभेचदारुणे प्रयोज्यंकुक्षिशूलेतुकोष्टशूलेविशेषतः व्यायामंमैथुनंमद्यंलवणंकटुकानिच वेगरोधंशुक्ररोधंशूलीजह्यात्तुवैदलं वेदनाचतृषामूर्छासानाह्यावेदनारुचिः कासश्वासश्चहिक्काचशूलस्योपद्रवाःस्मृताः इति वीरसिंहावलोकेशूलाधिकारः अथक्रमप्राप्तस्यपरिणामशूलस्यसनिदानंचिकित्सितमाह भुंक्तेजीर्यतियत्शूलंतदेवपरिणामजं तस्यलक्षणमित्येततुसमासेनाभिधीयते आध्मानाटोपविण्मूत्रविबंधारतिवेपनैः स्निग्धोपशमनोपायंवार्त्तिकंचक्वचितभिषकु स्वैर्निदानैःप्रकुपितोवायुःसन्निहतस्तथा कफपित्तेसमावृत्यशूलकारीभवेद्बली लंघनंप्रथमंकुर्यातुवमनंसविरेचनं वास्तिकर्मपरंचात्रपंक्तिशूलोपशांतये कृष्णाऽभयेलोहचूर्णंलिह्यात्समधुशर्करं परिणामभवंशूलंसद्योहंतिसुदारुणं पथ्यालोहर-

जः शुंठीचूर्णमाक्षिकसर्पिषा परिणामरुजंहंति वातपित्तकफात्मिकां त्रिफलालोहचूर्णंतुयष्टीम धुकमेवच मधुसर्पिर्युतंलिह्यात्शूलहतित्रिदोषजं सपिप्पलीगुडंसर्पिःपचेत्क्षीरंचतुर्गुणं ज्वरोपेतंहि हंत्याशुशूलंचपरिणामजं इतिवीरसिंहावलोके परिणामशूलाधिकारः अथेदानींआध्मानोदाव र्त्तरोगयोर्वातप्राबल्यात्साकल्येनैवज्योतिःशास्त्रा भिप्रायेणप्रकारोभिधास्यते तथोक्तं मध्येपापग्रहयोः चंद्रेमदनस्थितेर्कजेजंतोः श्वासक्षयविद्रधिनागुल्म प्लीहादिपीडितःसनरः अत्रादिशब्देनआध्मानोदावर्त्त रोगावपिगृह्येतेततः पापग्रहांतवर्त्तिचंद्रजनिताध्मा नोदावर्त्तरोगोपशांतयेपूर्वोक्तमेवजपहोमदानादिद द्यात् अथाध्मानोदावर्त्तरोगयोःकर्मविपाकमाह तत्प्रतीकारंच देवद्विजक्षेत्रतडागवल्मीककूप्या दीनांयोभेदंकरोतिवायसोनामग्रहोगृह्णाति तन्न क्षणमाध्मानोउदावर्त्तोज्वरोअरुचिर्मानपाददाहो चजायते अस्यप्रायश्चित्तंकृछ्रमाचरेत् आहुति भिराज्येनजुहुयात् हिरण्यंदद्यात् श्वेतकृष्णपी ताद्यनेकवर्णध्वजादिभिर्दीपादिभिः सहप्रदोषेच तुष्पथेबलिंमंत्रेणनिदध्यात् अनेनमंत्रेण प्रगृह्णी ष्वबलिंचेमंवायसाख्यमहाग्रह आतुरस्यसुखंसि

द्धिंप्रयच्छत्वंमहाबल इत्याध्यानोदावर्त्तरोगहरक
र्मविपाकविधिः अथक्रमप्राप्तस्योदावर्त्तरोगस्यसनि
दानंचिकित्सितमाह रुग्विनिश्चयात् वातविण्मूत्र
जृंभाश्रुक्षवोद्गारवमींद्रियैः क्षुत्तृष्णोच्छ्रासनिद्रा-
णांधृत्योदावर्त्तसंभवः वातमूत्रपुरीषाणांसंगाध्मान
क्लमोरुजः जठरेवातजाश्चान्यारोगाःस्युर्वातनिग्रहा
त् आमंसकृद्वानिचितंक्रमेण भूयोनिवद्धंविगुणानि
लेन प्रवर्त्तमानंनयथास्वमेतंविकारमानाहमुदाहरंति
वृंदसंग्रहात् हरीतकीयवक्षारपिलुनीत्रिफलातथा
चूर्णमेतत्सर्पिषापीतमुदावर्त्तविनाशनं हिंगुकुष्टवला
स्वर्जिविडंचेतिद्विरुत्तरे पीतंमद्येनतत्चूर्णमुदावर्त्त
हरंपरं मदनःपिप्पलीमूलंकुष्टंगौराश्चसर्षपाः गुडक्षा
रसमायुक्ताफलवर्तिःप्रशस्यते क्करांसौवर्च्चलवतीमू
त्रेत्वभिहितेपिवेत् पंचमूलीश्रितंक्षीरंद्राक्षारसम
थापिवा मूत्रकृच्छ्राश्मरीविधंप्रयुंजीतभिषक्सदा
स्नेहस्वेदैरुदावर्त्तजृंभाजंसमुपाचरेत् अस्रमोक्षो
स्रजेकार्यःस्निग्धस्वेदश्चयत्नतः क्षवजेमूत्रवर्त्या
चघ्राणस्थेनानयेत्क्षवं उद्गारजेक्रमश्चास्रस्नैहि
कंधूममाचरेत् छर्दिजातेयथादोषंतैलस्नेहादिभि-
र्जयेत् वस्तिशकृत्करंवापिचतुर्गुणजलंपयः आ
वीरनाशात्क्वथितंपीतंतच्चमकामतः रमयेयुःप्रिया

नार्यः शुक्रोदावर्तिनंतरं अन्नाभ्यंगावगाहाश्चमदिरा श्वरणासुधाः शालिःपयोनिरूहाश्चहंतिमैथुनमेवच क्षुद्विघातेहितंस्निग्धंमल्पमल्पंचभोजनं तृष्णाघातेपि वेन्मद्यंयवागूंवासुशीतलं निद्राघातेपिवेत्क्षीरंश्रोतव्या श्चाद्भुताःकथा आनाहेतुप्रयुंजीतउदावर्त्तहरंक्रियां द्विरुत्तरंहिंगुवचाचकुष्टंस्रुवर्चिकाचैवविडंगचूर्णं सुखां बुनानाहविसूचिकाक्षित्हृद्रोगगुल्मोर्द्धसमीरणघ्नं हिं गूग्रगंधाहवुषाअजाजीहरीतकीपुष्करमूलकुष्टं भागो त्तरंचूर्णितमेतदिष्टंगुल्मोदरानाहविसूचिकासु रामठं धूमविडव्योषगुडमूत्रैर्विपाचितं गुदेगुष्टसमावर्त्तिर्वि वंधानाहशूलनुत् स्तंभःकटीपृष्टपुरीषमूत्रैःशूलोथ मूर्छाशकृतश्चछर्दि श्वासश्चपक्वाशयजेभवति तथा लसोक्तानिचलक्षणानि तृष्णाछर्दिपरिक्लिन्नक्षीणंभू लेरुपद्रुतं सक्रूमंतंप्रतिमानूउदावर्तिनमुत्सृजेत् इतिवीरसिंहावलोकेउदावर्त्ताधिकारः अथगुल्मरोगस्य ज्योतिःशास्त्राभिप्रायेणप्रतीकारोलिख्यते यथा य दुक्तंजातके मध्येपापग्रहयोःचंद्रेमदनस्थितेर्कजेजं तोः श्वासक्षयविद्रधिभिर्गुल्मप्लीहादिपीडितःसनरः अत्रपापद्वयाभ्यंतरवर्त्तिचंद्र जनितगुल्मरोगोपश मनायपूर्वोक्तमेवकुर्यात् तेनोपशाम्यति अथगुल्मरोग स्यकर्मविपाकेप्रकारमाह तत्प्रतीकारंच यथोक्तंगु

रुग्णस्यर्थीवातगुल्मवान्भवति अस्यप्रतिक्रियां वात
गुल्मवान्यदिभवति तर्हिमासमेकंपयोव्रतमाचरेत्
मुंचामीत्यनेन ॐनमोपरमात्मनेसृतग्रस्तंचचरुघृता
भ्यामयुतंजुहुयात् वातआयानुभेषजमितिजपेत्
अन्नदानंचकुर्यात् प्रकारांतरमपिदर्शयति पद्मपु
राणे गुल्मीस्यादंत्यजागमने बौद्धायनः सौवर्णरा-
जतंताम्रंकारयेत्कांस्यतोपिवा तथार्कमूलकाष्टेनवि
घ्नेशंकल्पयेन्नरः पुष्करंकारयेद्धैमंसौवर्णलोचनद्वयं
आराध्यंकल्पयेत्तस्ययथादेवविनिर्मितं नागयज्ञोपवी
तंचकल्पयेतस्यगुल्मवान् अनंतरंस्कवासोभिश्चंदनाग
रुधूपितं सहिरण्यंब्राह्मणायस्वशक्त्यापूजितायच
कृतहोमायशांतायसर्वशास्त्रार्थवेदिने मंत्रेणानेनविधि
वत्दक्षिणाभिमुखायच विनायकगणेशत्वंसर्वदेव
नमस्कृत पार्वतीनंदन श्रेष्ठ ममगुल्मंविनाशय दान
मंत्रः कृतहोमेनदानेननिरोगोजायतेनरः इतिगुल्म
रोगहरविनायकदानविधिः अथक्रमप्राप्तस्यगुल्मरोग
स्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् दुष्टावा
तादयोत्यर्थंमिथ्याहारविहारतः कुर्वंतिपंचधागुल्मंको
ष्ठांतर्ग्रंथिरूपिणं तस्यपंचविधंस्थानंपार्श्वेहृन्नाभि
वस्तयः हृद्वस्त्योरंतरंग्रंथिः संचारीयदिवाचलः वृ
त्तश्चयापचयवान् सगुल्मइतिकीर्त्तितः सव्यस्तैर्जा

यतेदोषैः समस्तैरपिचोच्छ्रितैः पुरुषाणांतथास्त्रीणां ज्ञेयोरक्तेनवापुनः उद्गारबाहुल्यपुरीषबंध तृप्त्याक्षम त्वात्रविकूजनानि आटोपमाध्मानमपक्तिशक्तिमासन्न गुल्मस्यवदंतिचिन्हम् अरुचिःकृच्छ्रविण्मूत्रंमारुतांत्र- विकूजनं आनाहंचोर्द्ध्ववातंचसर्वगुल्मेषुलक्षयेत् वृंदसं. ग्रहात् लंघनंदीपनंस्निग्धमुष्णंवातानुलोमनं बृंहणं चभवेदन्नंतद्धितंसर्वगुल्मिनां सौवर्च्चलंशृंगवेरंद्राडिमं चाम्लवेतसं श्वासहृद्रोगशमनंस्यादेतत्हिंगुपंचकं स र्जिकाकुष्टसहितः क्षारः केतकिजोपिवा पीतस्तैलेन- शमयेद्गुल्मंपवनसंभवं रूक्षबोष्णोजांगलरसः स्फास्नि- ग्धोव्यक्तसैंधवः कटुत्रिकसमायुक्तोहितःपानेषुगुल्मि नां पिवेदेरंडतैलेनवारुणींमंडमिश्रितां तदेवतैलंपय सावातगुल्मीपिबेन्नरः यदिकुप्यतिवापित्तंविरेकस्त त्रभेषजं दोषघ्नैरप्यशीतेषुगुल्मशोणितमोक्षणं का कोल्यादिस्कसिद्धेनसर्पिषापित्तगुल्मिनां स्नेहितंस्रं सयेत्पश्चात्योजयेद्वस्तिकर्मणा स्नेहोपनाहनस्वे दस्तीक्ष्णश्रंसनवस्तिभिः योगैश्चवातगुल्मोक्तैश्श्ले ष्मगुल्ममुपाचरेत् पंचमूलीश्रितंतोयंपुराणंवारुणी रसं कफगुल्मीपिबेत्कालेजीर्णमाध्वीकमेवच यवानी चूर्णिततक्रंविडेनलवणीकृतं पिबेत्संदीपनंहृद्यंवातव र्चोनुलोमनं त्रिफलात्रिवृतादंतीदशमूलंपलोन्मितं

जलेचतुर्गुणेपक्काचतुर्भागस्थितेरसे सर्पिरेरंडजंतैलं
क्षीरंचैकत्रसाधयेत् ससिद्धोमिश्रकस्नेहःसक्षौद्रःफ
लगुल्मनुत् कफवातविकारेषुकुष्टप्लीहोदरेषुच प्रयोज्यो
मिश्रकस्नेहोयोनिशूलेषुचाधिकं इतिमिश्रकस्नेहः
त्र्यामिश्रदोषेत्र्यामिश्रएषएवक्रियाक्रमः सन्निपात
स्थितेदोषेत्रिदोषघ्नोविधिर्हितः पूतीकपत्रगजचिर्भटच
व्यवन्हि त्र्योषंचसंस्तरयुतंलवणोपधानं दग्ध्वाविचूर्ण्य
दधिमस्तुयुतंप्रयोज्यंगुल्मोदरस्वपथुपांडुगदोद्भवेषु व
चाहरीतकीहिंगुसैंधवंचाम्लवेतसं पंचक्षारंजवानीचपि
वेदुष्णेनवारिणा एतद्धिगुल्मनिचयंसशूलंसपरिग्रहं
भिन्नंभिसमरात्रेणवन्हेर्दीप्तिकरंपरं नादेयीकुटजा
र्केशिग्रुबृहतीस्नुग्बिल्वभल्लातकव्याघ्रीकिंशुकपारिभ
द्रक जटापामार्गनीपाग्निकान् वासामुष्ककपाटला
सलवणादग्ध्वाजलेपाचितं हिंग्वादिप्रतिचापमेतदुचि
तंगूल्मोदरार्षीलिषु इतिनादेयीक्षारः वल्लूरंमूलकं
मत्स्याशुष्कशाकानिवैदलं नखादेत्मूलकंगुल्मीम
धुराणिफलानिच विडंगाजाजिकाचव्यात्रिफलाव्यो
षचित्रकैः द्वौक्षारौपंचलवणंग्रंथिकंपुष्करंसठी यवा
न्यःकुंचिकाकुष्टविशालाधान्यकंवचा शतपुष्पाश्व
गंधाचहेमक्षीरीसुनीलिका हपुषातृवृतादंतीसातला
द्विगुणोत्तरा चूर्णनाराचकंपीतंमद्यमांसाम्लकांजिकैः

गुल्मार्शोग्रहणीरोगश्वासकासोदरंजयेत् इतिवीरसिं
हावलोकेगुल्माधिकारः अथज्योतिशास्त्राभिप्रायेण-
हृद्रोगस्यहेतुमाह तत्प्रतीकारंच यथोक्तंजातके पीडि
तहृद्योहिबुकेनिर्वाहनबांधवोसातिसौख्यः बाल्येब्या
धितदेहोनखरोमधरोभवेत्सौरेः अन्यच्च हृद्रोगीब-
हुदुःखस्वान्वितोहृदधिरोधरोषश्च परदारेषुस्कभग
कर्मस्कविनिश्चितोभवति कुंभधरेर्कजातइतिशेषः
अथचतुर्थस्थानस्थितस्यशनिजानितहृद्रोगोपशांत
ये पूर्वोक्तमेवशनिप्रीतयेप्रागुक्तमेवविधानंविदध्या
त् तेनोपशांतिर्भवति अथहृद्रोगस्यकर्मविपाकेप्र
कारमाह तत्प्रतीकारंच यथोक्तं परहृदयपीडाका
रीहृद्रोगीचजायते तस्यप्रायश्चित्तमेकंप्राजापत्यंकुर्या
त् तदशक्तोगास्कवर्णंचदद्यात् उद्यन्नद्येतिसूक्तंज
पेत्तिलाज्येनचजुहुयात् सहस्रनामस्तोत्रंजपेत् ना
मत्रयंवाजपेत् कूष्मांडहोमंचकुर्यात् अथक्रमप्राप्त
स्यहृद्रोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात्
अत्युष्णगुर्वन्नकषायतिक्तैः श्रमाभिघाताध्ययनप्रसं
गैः संचिंतनैर्वेगविधारणैश्चहृदामयःपंचविधःप्रदि
ष्टः शोषयित्वारसंदोषाविगुणाहृदयंगताः हृदिबाधां
प्रकुर्वंतिहृद्रोगंतंप्रचक्षते वातोपसृष्टेहृदये वामये-
त्स्निग्धमातुरं द्विपंचमूलीक्काथेनसस्नेहलवणेनच तग

रंवापिवेद्दुग्धांकषायंवाग्निवर्द्धनं कासश्वासानिलहरं शूलत्हृद्रोगनाशनं श्रीपर्णिमधुकंक्षौद्रंसितागुडजलैर्व मेत् पित्तोपसृष्टेत्हृदयेवमेतमधुरैःसृतं शीतांःप्रदेहाःप रिषेवनानितथाविरेकोत्हृदिपित्तदुष्टे द्राक्षासिताक्षौ द्रपुरीषकैश्चशुद्धेथपित्तापहमन्नपानं अर्जुनस्यत्वचा- सिद्धंक्षीरंयोज्यंत्हृदामये घृतेनदुग्धेनगुडांभसावापिबं तिचूर्णककुभत्वचोये त्हृद्रोगजीर्णज्वररक्तपित्तंहत्वाभ वेयुश्चिरजीविनस्ते वचाहिंगुकषायाभ्यांवातेत्हृदिकफो त्थिते वातत्हृद्रोगत्हृत्चूर्णंपिप्पल्यादिंचपाचयेत् चू र्णंपुष्करजंलिह्यात्माक्षिकेणसमायुतं त्हृत्भूलश्वा सकासघ्नंककुभस्यचवल्कलं हिंगूग्र गंधाविडशुंठि कृष्णाकुष्टाभयाचित्रकयावशूकं पिबेत्ससौवर्चलपु ष्कराढ्यंयवांभसाशूलत्हृदामयघ्नं कृमिजेचपिबेन्मू त्रंविडंगामयसंयुतं त्हृदिस्थितापतत्येवमधस्था कृमयोनृणां पार्थस्यकल्केनरसेनसिद्धंशस्तंघृतंस र्वत्हृदामयेषु इतिवीरसिंहावलोकेत्हृद्रोगाधिकारः

अथमूत्रकृछ्ररोगस्यजातकाभिप्रायेणअभिप्रायोभि व्यज्यते तत्प्रतीकारश्चयद्रुक्तंजन्मकालेयदायस्य- स्मरेभवतिभास्करिः राहुदृष्टःप्रकुरुतेमूत्रकृछ्रादिका रुजः सप्तमस्थानराहुदृष्टशनिजनितरोगोपशांतये शनिप्रीतयेपूर्वोक्तेनैवजपहोमदानादिकंकुर्यात् इ

दानींमूत्रकृच्छ्ररोगस्यकर्मविपाकम् कारमाह तत्
प्रतीकारंच गुरुणासार्द्धंसनतंमत्सरंस्त्रीदिवागामी
मूत्रकृच्छ्रवान्भवति गुरुतल्पानिदेशप्रायश्चित्तंकुर्या
त् अन्यच्चवायुपुराणे क्रूरापोमूत्रकृच्छ्रीस्यादिति
अथाहबोद्धायनः सौवर्णंकारयेत्पद्मंपलेनार्द्धपले
नवा यथावन्मतिमान्कुर्यात्पद्ममष्टदलंशुभं वि
त्तशाठ्यंनकुर्वीतभवेन्निष्फलमन्यथा द्रोणेतिलाढ
केवापिताम्रपात्रंजलान्वितं तस्यमध्येतुतत्पद्मंविद
ध्यात्कुंकुमान्वितं ब्राह्मणंश्रुतिसंपन्नंदरिद्रंचाग्नि
होत्रिणं आहूयगंधमाल्याद्यैःविधिनाचातिभक्तितः
ततःस्वर्णमयंपद्मंदद्यान्मंत्रेणसंस्तुतं भगःपूषापतं
गोसौद्वादशात्मात्रयीतनुःपद्मेनानेनदत्तेनप्रीतोभव
तुभास्करः दानमंत्रः कृतेनानेनमनुजोमूत्रकृच्छ्रा
त्प्रमुच्यते मूत्रकृच्छ्रातुरस्तस्मादेतत्कुर्यात्प्रयत्न
तः इतिमूत्रकृच्छ्रहरस्तिलपद्मदानविधिः अथक्र
मप्राप्तस्यमूत्रकृच्छ्ररोगस्यसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् व्यायामतीक्ष्णौषधरूक्षमद्यप्रसं
गनित्यद्रुतपृष्ठयानात् आनूपमत्स्याध्यशनादजी
र्णात्स्युर्मूत्रकृच्छ्राणिनृणांतथाष्टौ पृथग्मलाःस्वैःकुपि
तानिदानैःसर्वेथवाकोपमुपेत्यवस्तौ मूत्रस्यमार्गंप
रिपीडयंतियदातदामूत्रयतीहकृच्छ्रात् अश्मरीशा-

त्रिविधयोयउक्ताप्रसमीक्ष्यतान् यथायोगंप्रयुंजीत
स्नेहादिमपिचकर्म अभ्यंजनस्नेहनिरूहवस्तिस्वेदो
पनाहोत्तरवस्तिसेकान् स्थिरादिभिर्वातहरैश्चसिद्धा
न्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे अमृतानागरंधात्रीवा-
जिगंधात्रिकंटकं प्रपिबेद्वातरोगार्त्तःशूलवान्मूत्रकृच्छ्र
वान् शेकावगाहाःशिशिराःप्रदेहाश्चेष्टोविधिर्वस्तिपयो
विरेकैः द्राक्षाविदारीक्षुरसैर्घृतैश्चकृच्छ्रेषुपित्तप्रभवे
षुकार्यः कुशकासशरोदर्भःरजश्चेतितृणोद्भवं पित्तकृ
च्छ्रहरंपंचमूलंवस्तिविशोधनं एतत्सिद्धंपयःपीतंमेढ्
गंहंतिशोणितं हरीतकीगोक्षुरराजवृक्षपाषाणभि
द्धन्वयवासकानां क्वाथंपिबेन्माक्षिकसंप्रयुक्तंकृच्छ्
सदाहेसरुजेविबंधे मूत्रेणसुरयावापिकदलीस्वरसेन
वा कफकृच्छ्रविनाशायसूक्ष्मांपिष्ठात्रुटिंपिबेत् त-
क्रेणयुक्तंशितिमारकस्यबीजंपिबेत्कृच्छ्रविनाशहेतो
पिबेत्तथातंदुलधावनेनप्रवालचूर्णंकफमूत्रकृच्छ्री
गुडेनमिश्रितंक्षीरंकदुष्णंकामतःपिबेत् मूत्रकृच्छ्रेषु
सर्वेषुशर्करारोगनुत्तथा यवक्षारसमायुक्तंपिबेत्
तक्रंचकामतः मूत्रकृच्छ्रविनाशायतथैवाश्मरिनाश
नं तथापिघातजेकुर्यात्सद्योव्रणचिकित्सितं लेह्यं
शकृद्विबंधोत्थेशिलाजतुसमाक्षिकं एलाश्मभेदकशि
लाजतुपिप्पलीनांचूर्णानितंदुलजलैर्लुठितानिपीत्वा

यद्वागुडेनसहितान्यवलिह्यसद्यः आसन्नमृत्युरपिजी
वतिमूत्रकृच्छ्री सितातुल्योयवक्षारः सर्वकृच्छ्रविनाशनः नि
दिग्धिकारसोवाथसक्षौद्रःकृच्छ्रनाशनः शतावरीकाशकुश
श्वदंष्ट्राविदारकेक्षामलकेनसिद्धं घृतंचकृच्छ्राणिनिहंति
सद्यःपीतंकुलत्थप्रभवैस्तुयूषैः इतिवीरसिंहावलोकेमूत्रकृ
च्छ्रविनाशनः अथमूत्राघातस्यसनिदानंचिकित्सितमाह रु
ग्विनिश्चयात् जायंतेकुपितैर्दोषैःमूत्राघातास्त्रयोदश
प्रायोमूत्रविघाताद्यैःवातकुंडलिकादयः रौक्ष्याद्वेगविघाता
द्वावायुर्बस्तौसवेदनः मूत्रमाविश्यचरतिविगुणंकुंडलीकृ
तः मूत्रमल्पाल्पमथवासरुजंसंप्रवर्त्तते वातकुंडलिकां
तांतुव्याधिंविद्यात्सुदारुणां वृंदसंग्रहात् पटोलायाव
शूकाश्वपारिभद्रातिलाअपि क्षारोदकेनमदिरांत्वगेलोष
णसंयुतां पिबेद्गुडोदकंसम्यकुलित्थाद्यैस्तानपृथक्पृथक्
त्रिफलाकल्कसंयुक्तंलवणंवापियःपिबेत् निदिग्धिका
याःस्वरसंपिबेद्वातंदुलांबुना जलेकुंकुमकल्कंचसक्षौद्रं
भक्षितंनिशि सतैलंपाटलाभस्मक्षाराद्वापिपरिश्रितं
धान्याम्लयुक्तंपीत्वैवमूत्राघाताद्विमुच्यत रसंदुरालभा
याश्चकषायंवासकस्यच त्रिकंटकैरंडशतावरीणाम्पृसं
पयोवातृणपंचमूलैः गुडप्रगाढसघृतंपयोवारोगेषुकृ
च्छ्रादिषुशस्तमेतत् स्त्रीणामतिप्रसंगेनशोणितंयस्यसि
च्यते मैथुनेपरमस्तस्यबृंहणीयोविधिर्हितः चित्रकंसा

शिवाचैवबलाकालानुसारिवा द्राक्षाविशालापिप्पल्य-
स्तथाचत्रिफलाभवेत तथैवमधुकंदद्यात्पुष्टान्यामलका
निच घृताढकंपचेदेतैःकल्कैरक्षसमान्वितैः क्षीरद्रोणे-
जलद्रोणेतत्सिद्धमवतारयेत् शीतंपरिश्रितंचैवशर्करा-
प्रस्थसंयुतं तुगाक्षीर्याश्चतत्सर्वंमतिमान्परिमिश्रयेत्
ततोमितंपिबेत्कालेयथादोषंयथाबलं क्षतरेताःपित्तरे-
ताःश्लेष्मरेताश्चयोभवेत् रक्तरेताग्रंथिरेताःपिबेदच्छिन्न
रोगतांसंजीवनंतुवृष्यंचसर्पिरेतन्महागुणं प्रजाहितंच
धान्यंचसर्वरोगहरंशिवं सर्पिरेतत्प्रयुंजानास्त्रीगर्भंल
भतेचिरात् असृग्दोषाश्चयेचापियोनिदोषाश्चसंततः
मूत्रदोषेषुसर्वेषुकुर्यादेतत्चिकित्सितं चरकात्चित्रका.
द्यंघृतं इतिवीरसिंहावलोकेमूत्राघाताधिकारः अथज्यो
तिःशास्त्राभिप्रायेण अश्मरीरोगस्यहेतुमाह तत्प्रती-
कारंच भूरंप्रमेहूपीडितमश्मर्योपहतमानसंक्षांतं ज
नयतिरविणादृष्टोजीवगृहेचंद्रजःपुरुषं गुरुगृहेवर्त्त
मानरविदृष्टबुधजनिताश्मरीरोगप्रतीकारायबुधप्रीतये
पूर्वोक्तमेवजपहोमस्नानादिकंकुर्यात् अथाश्मरीरोग-
स्यकर्मविपाकेहेतुमाह तत्प्रतीकारंचयथोक्तं परस्त्री
गामीअश्मरीवान्भवति अश्मरीवान्चांद्रायणत्रयंकुर्या
त् यद्यपिकाण्योक्ताश्मरीहरत्वेदानाभिहितंतथापिस्व
र्णदानंकर्त्तव्यं तस्यसर्वपापहरत्वात्तथोक्तंब्रह्मांडपुरा

णे सर्वरोगोपशमनंसौवर्णदानमुच्यते इत्यश्मरीरो
गहरंस्वर्णदानं अथक्रमप्राप्तस्याश्मरीरोगस्यसनि
दानंचिकित्सितमाह रुग्विनिश्चयात् वातपित्तकफै
स्तिस्रश्चतुर्थीशुक्रजाश्मरी प्रायःश्लेष्माशयाःसर्वा
अश्मर्यःस्युर्यमोपमाः विशोधयेद्वस्तिगतंसशुक्रंमूत्रं
सपित्तंपवनंकफंच यदातदाश्मर्युपजायतेक्रमेणपि
त्तेष्विवरोचनागोः नैकदोषाश्रयाःसर्वाः अथास्याःपूर्व
लक्षणं वस्त्याध्मानंतदासंन्नदेशेषुपरितोतिरुक् मू
त्रेवस्तिसगंधिलंमूत्रकृछ्रंज्वरोरुचिः सामान्यलिंगं
रुग्नाभिसेवनीवस्तिमूर्द्धसु विशीर्णधारंमूत्रंस्यात्तथा
मार्गनिरोधने तद्व्यपाया त्सुखंमेधेदछंगोमेदकोप
मं वरुणस्यत्वचांश्रेष्ठांशुंठीगोक्षुर
संयुतां यवक्षारंगुडंदत्वाक्वाथयित्वापिवेद्धितां अश्मरी
वातजांहंतिचिरकालानुबंधनीं सुश्रुतात् वीरतरुस-
हचरद्वयदर्भवृक्षादनीगुंजानलकुशकाशाश्मभेदाग्नि
मंथमोरटवसुकवसिरंभाभल्लूककुरंटकेंदीवरकपोतव
क्रस्वदंष्ट्राचेति वीरतर्वादिरित्येषगणोवातविकारनु
त् अश्मरीशर्कराकृछ्रमूत्राघातरुजापहः त्रपुसैर्वारु
कादीनांवीजैश्चैवापितंशुभं वीरतर्वादिकंक्वाथंपंचतृ
णसमन्वितं भिनत्तिपित्तसंभूतामश्मरींक्षिप्रमेवतु व
रुणत्वक्शिलाभेदःशुंठीगोक्षुरकैःकृतः कषायःक्षीर

संयुक्तः शर्करांचभिनत्यपि वरुणत्वक्कषायंचपीतंतुगु डसंयुतं अश्मरींघातयत्याशुवस्तिशूलविनाशनं एलोप कुल्यामधुकाश्मभेदकौंतीश्वदंष्ट्राषकोरुवूकैः श्रितंपि वेदश्मजरुक्प्रगाढंसशर्कंरसाश्मरिमूत्रकृच्छ्रे कुलत्थसिंधु त्थविडंगसारंसशर्करंसातलियावशूकं वीजानिकूष्मांडक गोक्षुराभ्यांघृतंपचेत्तद्वरुणस्यतोये दुःसाध्यसर्वाश्मरि मूत्रकृच्छ्रमूत्राभिघातंचसमूत्रवंधं एतानिसर्वाणिनिहंति शीघ्रंप्ररूढवृक्षानिववज्रपातः कुलत्थाद्यंघृतं इतिश्री वीरसिंहावलोकेअश्मरीअधिकारः अथप्रमेहरोगस्य ज्योतिःशास्त्राभिप्रायेणहेतुंदर्शयति तत्प्रतीकारंच यथोक्तं शूरंप्रमेहपीडितमश्मर्योपहतमानसंशांतं ज नयतिरविणादृष्टोजीवगृहेचंद्रजंपुरुषं गुरुगृहवर्त्तमान बुधजनितप्रमेहरोगोपशांतयेदानंकुर्यात् तेनोपशांति भवति अथप्रमेहरोगस्यकर्मविपाकेहेतुमाह तत्प्रती कारंच कन्यागामी वातप्रमेहीभवति सचांद्राय णत्रयंकुर्यात् प्रतिरूपदानं मातृगामीस्वसृगामीमधु मेहीसततंजायतेनरः भ्रातृ भार्याभिगामीचजलमेहीनराधिपः योगच्छेद्भगिनींनि त्यमिक्षुमेहीतिनिश्चितं इतिवचनात् अत्रपूर्वोक्तोवि धिःकंप्रायश्चित्तंप्रकल्प्यंमात्रादीनामतिमात्राभिषिद्धत्वात् यत्राशक्तः तत्रकृच्छ्रत्रयंप्रतिदिनंचत्वारिंशत्ब्राह्मण

भोजनंकारयेत् पुरुषसूक्तंसहस्रनामस्तोत्रंगायत्रींच
जपेत् आनेरौद्रसूक्तेनाज्याहुतीहोमंजपंवाअष्टोत्तरस
हस्रंकारयेत् चांडालीगामीसर्वमेहीव्याधिमान्भवति स
ततंक्षुत्पिपासातुरश्चसपिप्पलीकामध्यचांद्रायणानिकु
र्यात् इदमापःप्रवहतउदुत्तमंवरुणेत्यादिभिर्मंत्रैर्ज्जपे
ज्जुहुयाच्चतिर्यग्गामीप्रमेहीशूलीसशांतपनानिकुर्यात्
व्याधिगुरुलघुत्वभावेनप्रायश्चित्तंगुरुलघुभावोदृष्टव्यो
इतिसर्वप्रमेहे वायुपुराणे ब्राह्मणस्वर्णहारीचप्रमेही
जायतेध्रुवं ब्राह्मणस्वर्णहरणप्रायश्चित्ताभिप्रायेतिना
रायणव्याख्या अथवृद्धगौतमः धेनुंस्वर्णमयींकुर्या
त्पूर्वेणविधिनाततः स्वर्णशृंगींचरत्नाढ्यांतथारूप्य-
खुरान्वितां तथैवतर्णकंकुर्यात्अष्टभागेनपूर्ववत् ब्रा
ह्मणंश्रुतिसंपन्नंवैष्णवंचकुटुंबिनं आचारवंतंधर्मिष्टं
द्विजशुश्रूषणेरतं गृहमागत्यविधिवत्पूर्ववत्पूजयेत्तुतं
होमांतेतांप्रदद्यात्तुमंत्रेणानेनमेहवान् चक्रंसुदर्शनंय-
स्यराजतेभुजंतथैवच प्रमेहंहरमेक्षिप्रंविष्णोगरुडवाह
न दानमंत्रः दानंप्रमेहरोगघ्नमेतत्कार्यंमनीषिभिः कृते
नानेनशाम्यंतिप्रमेहादारुणाअपि अत्रपूर्ववदितिज्ञे
यंइतिप्रमेहरस्वर्णधेनुदानविधिः अथक्रमप्राप्तस्य-
प्रमेहरोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्चया
त् आस्यासुखंस्वप्नसुखंदधीनिग्राम्योदकानूपरसाः

पयांसिनवान्नपानंगुडवैकृतंचप्रमेहहेतुःकफकृच्चसर्वं
मेदश्चमांसंचशरीरजंच क्लेदंकफोवस्तिगतंप्रदूष्यकरो
तिमेहान्समुदीर्णमुष्णो स्तानेवपित्तंपरिदूष्यचापि क्षी
णेषुदोषेषुविकृष्यधातून्संदूष्यमेहान्कुरुतेनिलश्च-
साध्याःकफोत्थादशपित्तजाःषट्याप्यानसाध्यापवना
च्चतुष्काः समक्रियत्वाद्विषमक्रियत्वा-महाक्रियत्वा-
च्चयथाक्रमंते कफःसपित्तःपवनश्चदोषामेदश्चशुक्रां
बुवसालसीका मज्जारसौजःपिशितंचदूष्यप्रमेहिणांविंश
तिरेवमेहाः दंतादीनांमलाढ्यत्वंप्राग्रूपेपाणिपादयोः दा
हश्चिक्कणतादेहेतृट्श्वासश्चप्रजायते सामान्यलक्ष
णंचैषांप्रभूताविलमूत्रता दोषदूष्यविशेषेणतत्संयोगावि
शेषतः मूत्रवर्णादिभेदेनभेदोमेहेषुकल्पयेत् सराविका
कच्छपिकाजालिनीविनतालजी समूरिकासर्षपिकापुत्रि
णीचविदारिका विद्रधिश्चेतिपिटिकाःप्रमेहोपद्रवादश
संधिमर्मसुजायंतेमांसलेषुचधामसु अथवृंदसंग्रहा
त् श्यामाककोद्रवोद्दालगोधूमचणकाढकी कुलत्था
श्चहिताभोज्येपुराणामेहिनांसदामेहिनांतिक्तशाकाजं
गलाहरिणांडजाः यवान्नविकृतीर्मुद्गाःशस्यंतेशालिष
ष्टिकाः परियात्रजटानिंबवहिगाचतृणिपृथक् पाठ
याःसगुडापीताक्काथाःश्रेष्टाःसमाक्षिकाः त्रिफलादारु
दार्व्यव्दक्काथः क्षौद्रेणमेहहा निशाकल्कयुतोधात्रीर

सोवामाक्षिकान्वितः मधुनात्रिफलाचूर्णमथवाश्मज-
तूद्भवंसकंटकारीत्रिफलाचित्रकेश्चसमैःकृतः क्वाथः-
क्षौद्रेणदातव्यःप्रमेहानांविनाशनः फलत्रिकंदारुनि
शांविशालांमुस्तांचनिक्वाथनिशांसकल्कं पिवेत्कषा
यंमधुसंप्रयुक्तंसर्वप्रमेहेषुसमुद्धितेषुन्यग्रोधोदुंबराश्व
त्थश्योनाकारग्वधासनं आम्रंकपित्थजंबूचप्रियालंक
कुभंधवं मधुकंमधुकंरोध्रंवरुणंपारिभद्रकं पटोलं
मेषभृंगीचदंतीचत्रिकमाढकं करंजंत्रिफलाशक्रभ
ल्लातकफलानिच एतानिसमभागानिश्लक्ष्णचूर्णा
निकारयेत् न्यग्रोधाद्यमिदंचूर्णमधुनासहलेहयेत्
फलत्रयंचानुपिवेत्तेनमूत्रंविशुध्यति एतेनविंशति
महामूत्रकृछ्राणियानिच प्रशमंयांतियोगेनपिटिकाच
नजायते इतिन्यग्रोधाद्यंचूर्णं मासिशुक्रेशुचौवा
पिशिलासूर्यांशुतापिताः जतुःप्रकाशंस्वरसंशिलाभ्यः
प्रस्रवेदिति शिलाजित्विति विख्यातंमहाव्याधिविनाश
नं तन्नयतूष्णमम्लंस्निग्धंनिशर्करंचयत् गोमूत्रगं
धिवच्चापितत्प्रधानंप्रचक्ष्यते सारसालादिक्वाथेनत
द्वियोज्यंयथाबलं जांगलेनरसेनान्नंतस्मिन्जीर्णे
तुभोजनं मासमेकंप्रयोक्तव्योरसायनोश्मयोषतः
विनाश्यमधुमेहास्व्यमंतकंरोगसंकरं कांतिवर्णबलो
पेतंशतंजीवत्यनामयः दधिमत्स्यकुलत्थांश्चकपोतां

श्चविवर्जयेत् इतिमेहेशिलाजितुप्रयोगः त्रिकटुका
स्मंतकसोमवल्कैः भल्लातकैः मातिविषैसलाजैः श्चाप
टोलार्जुननिंबमुस्तैर्हरिद्रयापद्मकदीपकैश्चमांजिष्टया
चागरुचंदनैश्चव्यस्तैः समस्तैःकफवातजेषुमेहेषुतैलंविप
चेत्घृतंतु द्वंद्वेषुमिश्रंत्रिषुलक्षणेषु इतिवीरसिंहावलोके
त्रिकटुकाद्यंघृतंतैलंयमकंच सराविकाद्याःपिटिकाः
साधयेच्छोफवद्भिषक् पक्वाश्चिकित्सेद्व्रणवत्तासांपाने
षुशस्यते काथोवनस्पतेर्वास्तंतीक्ष्णांमूत्रंचशोधनं एला
दिकेनप्रकुर्वीत तैलंचव्रणरोपणं सौवीरकंसुरासुक्तंतैलं
क्षीरंगुडंघृतं आम्रेक्षुरसजानूपिष्टान्यानूपानिचवर्जयेत्
वेल्लव्योषफलत्रिकत्रिलवणक्षारचव्यानलश्यामापि
प्पलिमूलमुस्तकसटीमार्क्षीकधान्यंत्वचं षड्ग्रंथामर
दारुवारणकणाभूनिंबदंतीनिशा पत्रैलातिविषोःपिचु
प्रमितयोर्लोहस्यकर्षाष्टकं त्वक्क्षीरीपलिकास्करात्
शपलान्यष्टौसिलाजन्मनः मीमांडीकुडकोन्मितेतिगुटि
कासंयोग्यकुर्याद्भिषक् तच्चैकांप्रतिवासरंसहाधिषाक्षौ
द्रेणलिह्याद्दिनं तक्रंमस्तुपयोरसंमधुततस्तावत्पिबे
न्मात्रया अर्शांसिप्रदरंज्वरंस्कविषमंनाडीव्रणानश्म
रीं कृच्छ्रंविद्रधिमाग्निमांद्यमुदरंपांड्वामयंकामलां य
क्ष्माणसभगंदरंसपिटकं गुल्मंप्रमेहारुची रेतोदोषमु
रःक्षतंकफमरुत्पित्तार्तिमुग्रांजयेत् वृद्धंसंजनयेद्यु

वानमसमौजस्कंवलंवर्द्धयेत् एतस्मान्नानिषिद्धमन्व
मसकृत्नाध्यागमंमैथुनं विख्यातागुटिकेयमांचिततराचंद्र
प्रभानामतः सांद्रानंदकरी करोतिरुचिरांचंद्रेणतुल्यां
तनुं. इतिचंद्रप्रभागुटिका इतिवीरसिंहावलोकेप्रमेह
मधुमेहपिटिकाधिकारः अथमेदोरोगस्यज्योतिःशास्त्रा
भिप्रायेणहेतुमाह यथोक्तंजातके अलसंसुखिनंस्थूलं
पतितंमिष्टाशनंभृगोस्तनयः शयनोपचारकुशलाद्वादशं
गस्त्रीजितंजनयेत् व्ययभावगतशुक्रजनितमेदप्रशम
नार्थंपूर्वविधानंविधेयं अथमेदोरोगस्यकर्मविपाकेहेतु
माह तत्प्रतीकारंचाह दधिचौर्येणपुरुषोजायतेमेद
सायुतः दधिधेनुःप्रदातव्यातेनविप्रायशुद्धये एवंकृत्वं
चकुर्यात् अथक्रमप्राप्तस्यमेदोरोगस्यसनिदानंचिकि
त्सितमाह रुग्विनिश्चयात् अव्यायामदिवास्वप्नश्ले
ष्मलाहारसेवितः मधुरान्नरसप्रायःस्नेहान्मेदोविवर्द्धते
मेदोमांसातिवृद्धत्वात्स्थूलास्युगुदरस्तनीः अव्यथो
पचयोत्साहोनरोतिस्थूलउच्यते अथवृंदसंग्रहात् पु
राणाः शालयोमुद्गाः कुलत्थोद्दालकोद्रवाः लेखनावस्त
यश्चैवसांशव्यामेदिनासदरः श्रमचिंताव्यवायश्चक्षौ
द्रवारिरणप्रियः हस्त्यश्वगश्चातिस्थौल्या वःश्या
माकभोजनः प्रातर्मधुयुतंवारिसेवितंस्थौल्यनाशनं
सचव्यजीरकव्योषहिंगुसौवर्चलानलाः मस्तुनासक्त

वः पीतामेदोघ्नावन्हिदीपनाः क्षारंवातालपत्रस्यहिंगुयुक्तं पिबेन्नरः मेदोवृद्धिविनाशायभक्तंमंडसमन्वितं पत्रांबु लोहामयचंदनानांशरीरदौर्गंध्यहरःप्रदेहः वासादलरसोपेतःशंखचूर्णेनसंयुतः बिल्वपत्ररसोवापिगात्रदौर्गंध्यनाशनः हरीतकीरोध्रमरिष्टपत्रंचूतत्वचादाडिमवल्कलंच एषोंगरागःकथितोंगनानांजंबूकषायश्चनराधिपाणां व्योषाग्निमुस्तात्रिफलाविडंगंगुग्गुलुःसमं खादेत्सर्वान्जयेद्व्याधीन्मेदः श्लेष्मामवातजान् इतिवीरसिंहावलोकेमेदोधिकारःसंपूर्णः अथज्योतिःशास्त्राभिप्रायेणउदररोगस्यहेतुमाह तत्रतीकारंचयथोक्तंजातके सिंहस्थोहिजनाथःकरोतिजातंरदनजठररोगार्त्तं स्त्रीद्वेषिणंचपुरुषंतथापिपासाक्षुधाविष्टं अथान्यत्र स्थूलास्थिस्फीतरोमापृथुवदनगलोह्रस्वपिंगाक्षियुग्मस्त्रीद्वेषीक्षुत्पिपासाजठरगदरुजापीडितोमांसभुक्त पांडुस्तीक्ष्णोल्पपुत्रोविपिननगरुचिर्मातृवश्यःसुवक्ता विक्रांतोकार्यकोपःशशिभृतिरविभेगर्भगंभीरदृष्टिः अपरंच प्रचुरामित्रस्तीक्ष्णोमृदुर्यग्निर्मंदालसश्चंद्रे षष्टे चो दररोगैःप्रपीडितःपुमान् भवति गंडोदराक्षिरोगास्युः पाशबंधनकंभवेत् उत्पातश्चभवेत्क्लेशोयदाशक्रगतोरविः क्षीणचंद्रांतदृशायामप्येवं सिंहांशस्थितचंद्रजनितोदररोगोपशांतये

पूर्ववद्दानुप्रीतयेजपहोमादिकंकुर्यात् अथोदररोगस्य
कर्मविपाकेहेतुमाह तत्प्रतीकारंच योब्रह्मविष्णुमहेशा
नामुत्तमभावेनभेदंशाधयति सउदरव्याधिमान्भवति
तच्छांतयेकृच्छ्रातिकृच्छ्रचांद्रायणानिकुर्यात् महेश्वरस्य
सहस्रकलशाभिषेकंकुर्यात् उद्यन्नद्येतिऋचमयुतंजपे
त् आतेरौद्रसूक्तेनचरुघृताभ्यामष्टोत्तरसहस्रंजुहुया
त् मधुघृतप्लुतहिरण्यंदद्यात् धर्मनिश्चयार्थस्वामिना
नियुक्तस्यततोन्यथमाचरतः प्राड्विवाकस्यमंत्रिणोवाज
लोदरत्वंतस्यप्रायश्चित्तंमासत्रयंपयोव्रतं शतब्राह्मण
भोजनंकारयेत् महादेवस्यसहस्रकलशाभिषेकंकुर्या
त् इतिजलोदरे पद्मपुराणे उदरव्याधियुक्तस्तुभवेद्गु
र्वंगनागमे चांद्रायणत्रयंकुर्यात्तस्यपापस्यशांतये
बौद्धायनः कुर्यात्तुमकरंसम्यग्राजतंताम्रमेवच पल
त्रयंपादहाभ्यांचतथैकेनतथाशुभं पुच्छेरत्नानिदेया
निकटिरूपेणकारयेत् नेत्रेस्वर्णमयेकार्येजिह्वारौ
प्यामकल्पयेत् पादयोःप्रक्षिपत्तत्रघृतपात्रेपुनर्द्वयोः
कृष्णवस्त्रेणसंवेष्ट्यचंदनागरुचर्चितं ताम्रेणजलपात्र
स्थेस्थापयेन्मकरंशुभं ब्राह्मणंवृत्तसंपन्नवृद्धंदांतम
लोलुपं वस्त्रैःकटककेयूरैःपूजयेदंगुलीयकैः होमोव
रुणदैवत्यैरग्न्याध्यायोक्तमार्गतः ततश्चोदरिकोविप्रो
मकरंविनिवेदयेत् जलाधिदेवदेवेशपश्चिमाशापते

उदरव्याधिनाशंमेकुरुदानेनतोषितः इतिजलोदरेम
करदानविधिः अथक्रमप्राप्तस्यउदररोगस्यसनिदानं
चिकित्सितमाह रुग्विनिश्चयात् रोगाःसर्वेपिमंदाग्नौ
सुतरामुदराणिच अजीर्णान्मलिनैश्चान्नैर्जायंतेमलसं
चयात् रुध्वास्वेदांबुवाहीनिदोषाःस्रोतांसिसंचिताः प्राणा
ग्न्यपानान्‌संदूष्यजनयंत्युदरंनृणां तत्पूर्वरूपंवल
वर्णकांक्षावलीविनाशोजठरेचरेखाः जीर्णापरिज्ञान
विदाहयुक्तत्याबस्तौरुजः पादगतश्चशोफः आध्मानं
गमनेशक्तिदौर्बल्यंदुर्बलाग्निता शोफःसदनमंगानां
संगोवातपुरीषयोः दाहस्तंद्राचसर्वेषुजठरेषुभवंतिहि
पृथक्दोषैःसमस्तैश्चप्लीहबद्धक्षतोदकैः संभवंत्युदरा
ण्यष्टौतेषांलिंगंपृथक्‌पृथक् शूनाक्षंकुटिलोपस्थमु
पक्लिन्नतनुत्वचं बलशोणितमांसाग्निपरिक्षीणं
चवर्जयेत् अथवृंदसंग्रहात् रक्तशालियवामुद्गा
जांगलाश्वरसाहिताः विरेकस्थापनंशस्तंसर्वेषुजठरे
षुच क्षारेणैरंडजंतैलंपिबेन्मूत्रेणचासकृत् ज्योतिष्म
त्याःपिबेत्तैलंपयसाचदिनेदिने सर्वेभ्योप्युदरेभ्यस्तुद्रुतं
मुच्यतेमानवः वातोदरीपिबेत्तक्रंपिप्पलीलवणान्वितं
शर्करामरिचोपेतंस्वादुपित्तोदरीपिबेत् जवानीसैंधवाजा
जीव्योषयुक्तंकफोदरी सन्निपातोदरीतक्रंत्रिकटुक्षार
सैंधवैः स्नुहीपयोभावितंतंदुलचूर्णैर्विनिर्मितोयूषः उदर

मुद्गारं हन्यात् योगोयंसप्तरात्रेण स्नुहीपयोभाविताना-
पिप्पलीनापयोभृतःसहस्त्रमुपयुंजीत शक्तितोजठरामयी
मुक्तरोगश्चिरंजीवीबलवर्णसमन्वितः पिप्पलीवर्द्धमानं
वाकल्पदृष्टंप्रयोजयेत् जठराणांविनाशायनास्तितेन
समंभुवि त्रिभिरथपरिवृद्धंपंचभिःसप्तभिर्वादशभिरथ
विवृद्धंपिप्पलीवर्द्धमानं इतिपिबातिपयोयस्तस्यनश्वा
सकासज्वरजठरगदार्शोवातरक्तक्षयास्युः पटोलमूलंर
जनीविडंगंत्रिफलात्वचंकंपिल्लकंचनिलिनीं त्रिवृत्तंचेति
चूर्णयेत् षड्डाद्याकर्षिकान्भागान्पंचाद्यान्त्रिचतुर्गुणा
न् कृष्णाचूर्णतलोमुष्टिंगवांमूत्रेणयःपिबेत् विरक्तोजांग
लरसैर्भुंजीतमृदुभोजनं मंडपेयांचपीत्वाचसव्योषंषडहं
पयः श्रितंपिबेततच्चूर्णंपिबेदेवंततःपुनः हंतिसर्वोदरा-
ण्येवचूर्णंजातोदकान्यपि कामलंपांडुरोगंचस्वयथुंचा
पकर्षति इतिपटोलाद्यंचूर्णं यवानीहपुषाधान्यत्रिफला
सोपकुंचिका कारवीपिप्पलीमूलमजगंधासठीवचा
शताव्हाजीरकंव्योषंस्वर्णक्षीरीसाचित्रिका द्वौक्षारोपौ
ष्करंमूलंकुष्टंलवणपंचकं विडंगंचसमांशानिदंतीभाग
त्रयंतथा त्रिवृद्धिशालेद्विगुणेसातलास्याच्चतुर्गुणा
एषनारायणोनामचूर्णोरोगगणापहः एनंप्राप्यनिवर्त्तते
रोगाविष्णुमिवासुराः तक्रेणोदरिभिःपेयोगुल्मिभिर्बद
रांबुना आनद्धवातेस्करयावातरोगेप्रसन्नया दधिमं

डेनविडंगेदाडिमांबुभिरर्शसि भगंदरेपांडुरोगेकासेश्वासेगलग्रहे हृद्रोगेग्रहणीदोषेकुष्टेमंदानलेज्वरे दंष्ट्राविषेमूलविषेसंगरेकृत्रिमेविषे यथार्हस्निग्धकोष्टेनपेयमेतद्विरेचनं त्रिवृतात्रिफलापाठादंतीकटुकरोहिणी चतुरंगुलमज्जावातथाचकटुकत्रयं चित्रकंचवृहत्योचतथाचगजपिप्पली स्नुहीक्षीरपलंदद्यात्घृतस्याष्टौप्रदापयेत् यावत्पिवतितद्विंदून्तावद्वेगाद्विमुच्यते एतद्विंदुघृतंसिद्धमृषिभिःसमुदाहृतं इतिबिंदुघृतं नारायणचूर्णं पीतःप्लीहोदरंहंति पिप्पलीमरिचान्वितः अम्लवेतससंयुक्तःशिग्रुक्काथःससैंधवः पालासक्षारतोयेनभाविताःपिप्पलीःशुभाः गुल्मप्लीहोदरंहंतिवन्हेर्द्दीपनकारिकाः अर्कपत्रंसलवणंपुटदग्धंसुचूर्णितं निहंतिमधुनापीतंप्लीहानमतिदारुणं शरपुखामूलकल्कःपीतस्तक्रेणनाशयत्यचिरात् चिरतरकालसमुत्थंप्लीहानंसुदृढमवगाढं हरीतकीनागरदेवदारुपुनर्नवाछिन्नरुहाकषायः सगुग्गुलुर्मूत्रयुतश्चपेयःशोफोदराणांप्रवरःप्रयोगः रोहीतकाभयाशुंठींपिवेन्मूत्रेणशक्तितः सर्वोदरहरप्लीह महार्शःकृमिगुल्मनुत् पातव्योयुक्तितःक्षारःक्षीरेणोदरियुक्तितः पयसाचप्रयोक्तव्याःपिप्पल्यःप्लीहशांतये एरंडतैलंदशमूलमिश्रंगोमूत्रमिश्रस्त्रिफलारसोवा निहंतिवातोदरशोफशूलंक्काथःससूत्रो

दशमूलजोवा गोमूत्रयुक्तमहिषीपयश्चक्षीरंगवांवात्रि
फलाविमिश्रं क्षीराम्लभुक्केवलमेवगव्यंमूत्रंपिवेद्वाश्वय
थूदरेषु उदकानूपजमांसशाकंपिष्टकृतंतिलं व्याया
माध्वंदिवास्वप्नपानाजीर्णंविवर्जयेत् तथोष्णालवणा
म्लानिविदाहीनिगुरूणिच नाद्यादन्नानिजठरीतोय
पानंचवर्ज्जयेत् इतिवीरसिंहावलोके उदरप्लीहोदर
शोफोदराधिकारः अथश्वयथुरोगस्यज्योतिःशास्त्रा
भिप्रायेणहेतुमाह तत्प्रतीकारंच नीचस्थगुरुदशा-
यांश्वयथुगुल्मकर्णरोगाश्चेतिदर्शनात् तत्प्रतीकारार्थं
बृहस्पतिप्रीतयेजपहोमादिकंसकलमपिकार्यं अथ
श्वयथुरोगस्यकर्मविपाकाभिप्रायेणहेतुमाह तत्प्रती
कारंच मार्गेपुलिनेपर्वताग्रेकपित्थछायामाधिरुह्य
विष्टांमुंचतितत्रष्ठीवति आमवातश्वयथुभिःपीड्यमा
नोनिशंमूर्छितोभवति पर्वताग्रंनदीतीरंछायामारुह्य
वानरः मूत्रंपुरीषमथवायःप्रक्षिपतिवाजले श्वयथु
व्याधिमाप्नोतिइत्याहभगवान्शिवः सइदंवोविश्वतः
शरीरइत्यादिनाअष्टोत्तरशतायुतत्रयजपंकुर्यात्
आपोहिष्टामयोभुवइत्यनेनचरुघृताभ्यामष्टोत्तरायु
तत्रयंहोमंकुर्यात् अत्रव्याधिगुरुलघुभावोचहृष्ट्वौ
तथाचवृद्धबोद्धायनः विघ्नकर्त्ताचभोनृणांशोफीभव
तिमानवः तस्यकर्मविपाकत्वव्याधिनाशनमुत्तमं दा

नंवक्ष्याम्यशेषेणसर्वशोफविनाशनं क्षौमवस्त्रंस
मानीयवहुमूल्यंचयद्भवेत् मुक्ताफलानिवध्नीयाद्वस्त्र
प्रांतेसमंततः कुंकुमेनार्चितंसम्यक्कर्पूरागरुधूपिता
तंदुलोपरिसंस्थाप्यतंदुलाश्चस्वशक्तितः उपचारैःषोडश
भिराचार्यपूजयेत्ततः युवासाइतिमंत्राभ्यांपूजनंवतता
विदः युवंचस्त्रीणित्येकयुवासुवासाइत्यपरोमंत्रः होमं-
चापिप्रकुर्व्वीतसमिदाज्यतिलैरपि उद्बुध्यस्वइदंविष्णु
सप्तर्षेमंत्रैःक्रमेणजुहुयात् स्विष्टकृद्धयदस्यकर्मणोन्तरी
रेचमेति मंत्रैर्होमः हुत्वाद्यसस्त्रवानूपूर्वपात्रेसर्वानिवेश्या
संख्याचाष्टोत्तरशतमष्टाविंशतिरेव संपातेनागमा-
र्ज्जनंसर्वमेवहिरोगिणः अक्षीभ्यामितिसूक्तेनयथालिं
गंतथैवहि वाससामार्जनंकुर्यात् सयाजीदर्भमुष्टिना
आचार्यायतुतद्वस्त्रंदद्यात्सोपिसदक्षिणं मंत्रेणानेन
विधिवत्दक्षिणाभिमुखःशुचि ऋषीणांप्रवरोगस्त्यो
लोपामुद्रापतिःप्रभु क्षौमवस्त्रप्रदानेनतुष्येव्याधिंव्य
पोहतु दानमंत्रः ब्राह्मणेभ्य स्तथान्येभ्योदद्याछ
क्त्याचदक्षिणां ततःस्नातःशुचिर्भूत्वावस्त्रमाल्योप
शोभितः ब्राह्मणैर्बहुभिःसार्द्धंभुंजीतातीवभक्तितः इ
तिशोफहरक्षौमदानविधिः अथक्रमप्राप्तस्यशोफरो
गस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् रक्तपि
त्तकफाद्वायुर्दुष्टोदुष्टान्वहिश्शिरान् नीत्वारुद्धगतिस्त

हिं कुर्यात्त्वग्मांससंश्रयं सोत्सेधं संहतं शोफं तमाहुर्निच
यादथ सर्वहेतुविशेषैस्तु रूपभेदं नवात्मकं दोषैः पृथक्
द्वयैः सर्वैरभिघाताद्विषादपि तत्पूर्वरूपं दवथुः शिरा
यामांसगौरवं क्षुध्यामयाभक्तकृशाबलानां क्षाराम्ल
तीक्ष्णोष्णगुरूपसेवा दध्याममृच्छाकविरोधिदुष्टग
रोपसृष्टान्ननिषेवणं च अर्शांस्यचेष्टा न च देहशुद्धिर्म
र्मोपघातो विषमा प्रसूतिः मिथ्योपचारः प्रतिकर्मणां च
निजस्य हेतुः श्वयथोः प्रदिष्टः ऊर्द्धगामी नरं पद्भ्यां मध्ये
गामी मुखात् स्त्रियं उभयोर्वस्तिसंजातः शोफो हंति
न संशयः छर्दिश्वासोरुचिस्तृष्णाज्वरातीसार एव च
सप्तकोयं सदौर्बल्यः शोफोपद्रवसंग्रहः शुंठीपुनर्नवैरं
ड पंचमूलीश्रितं जलं वातिकेच यथाशक्तं पानाहारपरि
ग्रहे पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलः हंति पि
त्तकृतं शोथं तृष्णाज्वरसमन्वितं शोफे कफोत्थे महिषा
क्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैव कफे तु तृष्णा सिकता
पुराणपिण्याकसिग्रुत्वकजप्रलेपः गुडार्द्रकं वा गुडना
गरं वा गुडाभयां वा गुडपिप्पलीं वा कर्षाभिवृद्ध्या त्रिपल
प्रमाणं खादेन्नरः पक्षमथापि मासं शोफप्रतिश्यायगला
स्यरोगान् सश्वासकासारुचिपीनसादीन् जीर्णज्वरा
र्शोग्रहणीविकारान् हन्यात्तथान्यान् कफवातरोगान्
आर्द्रकः स्वरसः पीतः पुराणगुडमिश्रितः अजाक्षीरा

शिनाशीघ्रंसर्वशोफहरोभवेत् कृष्णाभ्रविश्वघनजीरककं
टकारीपाठामृताकरिकणामगधाजटानां चूर्णंकवोष्ण
सलिलेनविलोड्यपीतंनातःपरंस्वयथुरोगहरंनराणां द्वि
पंचमूलस्यतुलाकषायेकंसंभयानीचशतंगुडाच्च लेहेसु
सिद्धेचविनीयचूर्णंव्योषंत्रिसौगंध्यमथोसुशीतं प्रस्था
र्द्धमात्रंमधुनःसुशीतेकिंचिच्चचूर्णीकृतयावशूकं एका
भयांप्राश्यततश्चलेहात्स्कर्किंनिहंतिस्वयथुंप्रवृद्धं श्वा
संज्वरारोचकमेहगुल्मान्प्लीहत्रिदोषोदरपांडुरोगान् का
र्श्यामवातमसृगम्लपित्तंवैवर्ण्यमूत्रानिलशुक्रदोषान्
इतिकंसहरीतकी विदाहिवाम्लंलवणानिमद्यंमृदंदिवा
स्वप्नमजांगलंच स्त्रियोघृतंतैलपयोगुरूणिशोफीजि-
हासुःपरिवर्जयेच्च इतिवीरसिंहावलोकेशोफाधिका
रः अथज्योतिःशास्त्राभिप्रायेणअंत्रवृषणत्वस्वरोगा
णांहेतुमाह यदुक्तं ऊर्ज्जितगुह्यरोगातोर्मीनस्थेर्के
निदर्शनात् कुलटाभार्याद्वेषीवधनिष्टोदद्रुणोदरिद्रश्च
अलिनिष्टेसितेभवतिपुमान्गृहीताशिलतः सगुह्यगदः
शुक्रपूजादिकंविधिवत् अत्रआद्यशब्देनेतिमुष्कपी-
डादयोभिगृह्यंते तदुपशांतयेकर्कटसंस्थितमंगलाव
लोकितसूर्यजनितमुष्करोगोपशांतयेपूर्ववत्जपहो
मादिकंकुर्यात् अथवृषणरोगस्यकर्मविपाकेहेतुमा
ह तत्प्रतीकारंच तत्रस्नुषागामीवातवृषणः अथमा

यश्चित्तंआत्मजस्त्रियं असकृदज्ञाना द्धत्वाचांद्रायणत्र्र यात्शुद्धेत् ज्ञानात्सकृद्गमनेकृच्छ्राब्दाशक्तिः आसामेकां बुद्धिपूर्वकंबहुदिनेषुगत्वा अग्निंप्रविश्यमृतःशुद्धेत् अ पराधमंतरेणयोनृपोभृत्यादीनांहस्तपदादीन् छेदयति त स्यमुष्कमग्निना दग्धमिवशिलापिष्टमिव वृषणंजायते पश्चाद्रुधिरःश्रवति सरुद्रसंहितामष्टोत्तरसहस्त्रंजपे त् प्रतिचांद्रायणत्रयंकुर्यात् गांदद्यात् जायतेवृषणे यस्यव्याधिः परमदारुणः जपित्वादशसाहस्त्रंमुच्यतेरु द्रसंहितां इतिविष्णुवचनात् इतिवृषणव्याधिप्रतीका रः अथांत्ररोगेविशेषतयाकर्मविपाके हेतुमाह् तत्प्रती कारंच पूर्वजन्मनिवेश्यहंतुरंत्राणि छिन्नानीवभवंति पश्चाच्छीतज्वरमनंतरमुष्णज्वरमपातदाहश्चभवतिशत ब्राह्मणभोजनंचउद्यन्तद्योतिऋचमयुतत्रयंजपेत् आ तेरौद्रसूक्तेनमधुघृताभ्यांजुहुयात् अथवामहिषींप्रति रूपांवदद्यात् इतिसोपद्रवां पीडायांब्रह्मणोक्तंच य ज्ञेविघ्नकरोमर्त्योजायतेचांत्रवृद्धिमान् वक्ष्यामितत्प्र तीकारंदानहोमादिकर्मणा कुर्यात्स्वर्णमयींधेनुंशु भंनारायणस्यतु अवहारिक निष्काभ्यांएकेनापि- तदर्द्धतः नारायणलक्षणमुक्तं हेमहस्तिरथदाने प्र क्षाल्यपंचगव्येनस्थापयेत्कुंकुमोपरि श्वेतवस्त्रेणसं वेष्ट्यगंधमाल्यैःसमर्चयेत् उपचारैःषोडशभिःआचार्यो

वैष्णवःशुचिः सर्वशास्त्रार्थतत्वज्ञोब्रह्मविद्यासुनिश्चि
तः होमंचकारयेत्तत्राग्नेय्यांदिशिशास्त्रतः समिदाज्य
तिलैश्चैव ॐनमोनारायणेतिच तिलान्आहुतिभिर्जुहु
यात् रोगीतथाऽर्चयेद्देवंनारायणमनामयं मूलमंत्रेणविधि
वत्नैवेद्यंचरुरिष्यते नमोतंनामसोंकारंमूलमंत्रःप्रकीर्त्ति
तः ततस्तांप्रतिमांदिव्यांप्राङ्मुखायउदङ्मुखः मंत्रेणा
नेनविधिवत्भक्त्यापरमयायुतः नारायणजगन्नाथशं
खचक्रगदाधरः पूर्वजन्मनियत्नादिविप्राद्यादैकृतंमया
अंत्रवृद्धिंमहारोगंदानेनानेननोषितः चक्रहस्तगदापाणे
शमयाभुजगत्पते दानमंत्रःएवंकृत्वातुतंदेवंक्षमाप्यब्रा
ह्मणंततः विप्राणांभोजनंदद्यात्स्नात्वाभुंजीतवाग्यतः
एवंकृत्वासमाप्नोतिनिरोगत्वंनरोभुवि आरोग्ययुक्तोनि
त्यंहिसुचिरंसुखमेधते इतिअंत्रवृद्धिहरनारायणदा
नविधिः अथक्रमप्राप्तस्यसनिदानंचिकित्सितमाह रुग्वि
निश्चयात् क्रुद्धोनूर्ध्वगतोवायुःशोफभूलकरश्चरन् मु
ष्कोवंक्षतःप्राप्यफलकोशाभिवाहिनीः प्रपीड्यधमनी
वृद्धिःकरोतिफलकोशयोः दोषास्त्रमेदोमूत्रांतेसवृद्धिः-
सप्तधागदः गुग्गुलुंरुवुतैलंवागोमूत्रेणपिवेन्नरः वातवृ
द्धिंनिहंत्याशुचिरकालानुबंधिनीं सक्षीरंवापिबेत्तैलंमा
समेरंडसंभवं तैलंनारायणंयोज्यंपानाभ्यंजनबस्तिषु
त्रिफलाक्काथगोमूत्रंपिबेत्प्रातरतंद्रितः कोष्टवातोद्रवं

शोफंनिहन्यात्वृषणोद्भवं चंदनंमधुकंपद्ममुशीरंनील
मुत्पलं क्षीरपिष्टैःप्रलेपःस्यात्दाहशोफरुजापहः पंच
वल्कलकल्केनसघृतेनप्रलेपनं सर्वपित्तहरंकार्यंरक्त
जेरक्तमोक्षणं वचासर्षपतैलेनप्रलेपःशोफनाशनः स
र्पत्वग्सर्षपैःपिष्टैःशोफश्लेष्मानिलापहः तैलमेरंडजं
पीतंबलासिद्धंपयोन्वितं आध्मानशूलोपचितामंत्रवृद्धिं
जयेन्नरः गोमूत्रसिद्धांसिरुचुतैलभृष्टांहरीतकींसैंधवचू
र्णयुक्तां खादेन्नरःकोष्णजलानुपानान्निहंतिवृद्धांचिर
जांत्रवृद्धिं गव्यंघृतंसैंधवचूर्णयुक्तं शंबूकभागेनिहितं
प्रयत्नात् सप्ताहमादित्यकरैर्विपक्कंनिहंतिकौरंडकमंत्र
वृद्धिं इतिकुरंडक इतिवीरसिंहावलोकेअंत्रवृद्ध्य
धिकारः अत्यभिष्यंदिगुर्वम्लसेवनान्निचयंगतः करो
तिग्रंथिवच्छोफंदोषोवंक्षणसंधिजः ज्वरःशूलांगदाहा
द्यंतंवर्ध्ममितिनिर्दिशेत् मूलंबिल्वकपित्थयोररुलकस्या
ग्नेर्बृहत्योर्द्वयोः श्यामापूतिकरंजशिग्रुकतरो विंभीष-
धारुष्करं कृष्णाग्रंथिकचव्यपंचलवणक्षाराजमोदान्वि
तं पीतंकांजिककोष्णतोयमथितैश्चूर्णीकृतंवर्ध्मजित् भ्रष्टए
रंडतैलेनकल्कःपथ्यासमुद्भवः कृष्णासैंधवसंयुक्तोव
र्ध्मरोगहरःपरः अविक्षीरेणगोधूमचूर्णंकुंदुरकस्य
च प्रलेपनंमुखोष्णंस्यात्वर्ध्मरोगहरंपरं इतिवर्ध्मा
धिकारः इतिवीरसिंहावलोकेमुष्कवृद्ध्यंत्रवृद्धिवर्ध्मा

धिकारः अथज्योतिःशास्त्राभिप्रायेणगलगंडगंडमाला
पचीरोगहेतुमाह तत्प्रतीकारंच गंडोदराग्निरोगैःक्षि
तिपतिनाबंधनादिभि स्तत्कःशक्रदशायांसूर्योविचर
तिनूनंभवेत्पुरुषः अपरंच शिरसोरुग्गलरोगाक्षि
त्रंसहसाज्वरःशूलं तपनदशायांशुक्रेदेशत्यागोभवेद्
रिभिः शिरेरुग्गलरोगैश्चज्वरसतीसारशूलकैः शरीरक्ले
शमाप्नोतिसूर्यस्यांतर्गतेभृगौ अपरंच शिरोरोगोगल
ग्राहोनानाक्लेशविमर्द्दनं चौरातंकभयव्याधिर्बुधस्यांत
र्गतेकुजे शुक्रांतर्वर्त्तमानसूर्यजनितगलगंडगंडमालारोग
प्रीतयेयथोक्तमपिसकलंकुर्यात् तथाच सूर्यांतर्वर्त्त-
मानशुक्रजनितगलगंडगंडमालोपशांतयेशुक्रोक्तकार्यं अ
न्यच्च बुधांतःशुक्रजनितगलग्रहरोगप्रतीकारायभौम
प्रीतयेयथोक्तंकुर्यात् तेनोपशांतिः गुरुद्वेषीपरचित्त-
दुःखकारीगुल्मीगंडमालाव्याधिमांश्चजायते एतद्ब्र
ह्मसत्येभिहितं अपरंच ब्राह्मणंप्रतार्ययोध्यापयति-
शिष्यश्चगुरुंवं चयित्वायोधीयतेसगंडमालीभवति अ
स्यप्रायश्चित्तं अनुक्तनिःकृतित्वाच्चांद्रायणंकुर्यात् एत
न्मानवेभिहितं गंडमालागलगंडोपशांतयेपुरुषसूक्तं
ऋषिछंदोदैवतानिज्ञात्वैवजपेत् अविदित्वाऋषिछंदो
दैवतंयज्ञमेवच योध्यापयेज्जपेद्वापिपापीयान्जायतेतु
सः इतिवचनात् तस्माच्छंदोऋषिदैवतानिज्ञात्वैवज

पेत् एतच्चाधीत ब्राह्मणविषयं कृछ्रचांद्रायणब्रह्म-
भोज्यानिचकारयेत् अभक्षभक्षीचैव अथज्योतिःशा
स्त्राभिप्रायेणहेतुमाह तत्प्रतीकारंच मूर्छाशोणितदो
षशाखाछेदोव्रणश्चापिपित्तसमुत्थैर्दोषैरभिभूतोमान
वोभवति अथभौमदशाजनितार्बुदरोगव्रणप्रतीकार
भौमप्रीतयेपूर्वोक्तमेवसकलंकुर्यात् तेनोपशांतिर्भव
ति अथार्बुदरोगस्यकर्मविपाकहेतुमाह तत्प्रतीकारं
च पूर्वजन्मनिविधवासार्द्धंरममाणःरक्तार्बुदवान्भव
ति विधवागमनेनित्यंरक्तार्बुदीभवेन्नरः नारदीयव
चनात् रक्तार्बुदीनरःकुर्यात्प्रायश्चित्तंप्रशांतये इति
वचनात् कृछ्राणीति कृछ्रचांद्रायणानिसमस्तानिव्य
स्तानिवागुरुलघुभावापेक्षयासमाचरेत् सुवर्णदानं
चदद्यात् ब्राह्मणभोजनंचकारयेद्विभवापेक्षयाइति
रक्तार्बुदव्रणहरणे अथक्रमप्राप्तानांगलगंडगंडमालाप
चीग्रंथ्यर्बुदानांसनिदानं चिकित्सितमाह रुग्विनिश्च
यात् निबद्धःश्वयथुर्यस्यमुष्कवल्लंबतेगलेमहान्वाय
दिवाऱ्हस्वोगलगंडंतमादिशेत् यवमुद्गपटोलानिक-
टुरूक्षंचभोजनं छर्दिःसरक्तमुक्तिंचगलगंडेप्रयोजये
त् निचुलंशिग्रुबीजानिशणबीजातसीयवान् मूल-
कस्यचबीजानितक्रेणाम्लेनपेषयेत् गंडानिग्रंथिज-
श्चैवगंडमालाःसमुत्थिताः प्रलेपात्तेननश्यंतिविलयं

यांतिवाचिरात् जीर्णकर्क्कारुकरसोधिडसैंधवसंयुतः नश्येनतरुणंहंतिगलगंडनसंशयः जलकुंभिकजंभस्म पक्वंगोमूत्रगालितं पिवेत्कोद्रवभस्माशीः गलगंडोपशांतये स्वेतापराजितामूलंप्रातःपिष्टापिवेन्नरः सर्पिषानिहिताहारोगलगंडप्रशांतये तिक्तालांवूफलेपक्केसप्ताहमुषितंजलं मद्यंवागलगंडघ्नंपानानुपथ्यास्तु शीलितैः कर्कंधुकोलामलकप्रमाणैःकक्षासमन्यागलवंक्षणेषु मेहःकफाभ्यांचिरमंदपक्कैःस्याद्गंडमालाबहुभिस्तुगंडैः तेग्रंथयःकेचिदवाप्तपाकाःश्रवंतिनश्यंतिभवंतिचान्ये कालानुवंद्धंचिरमादधातिसैवापचीतिप्रवदंतिकेचित् माक्षिकाढ्यःसकृत्पीतःक्काथोवरुणमूलकः गंडमालांनिहंत्याशुचिरकालानुबंधिनीं विडंगानलसिंधूत्थराभ्नोग्राक्षारदारुभिः तैलेचतुर्गुणेसिद्धंकटुतुंबीरसेशुभे गंडमालाहरंश्रेष्टंगलगंडेप्रशस्यते तुंवीतैलं ओषधिडंगमधुकंसैंधवंदेवदारुच तैलमेभिःसृतंसम्यक्कृच्छ्रमप्यपचींहरेत्॥ओषाद्यंतैलं ॥छुछुंदर्याविपक्वंतुक्षणातैलंवरंध्रुवं अभ्यंगान्नाशयेन्नृणांगंडमालांसुदारुणां॥छुछुंदरीतैलं॥ सौभांजनंदेवदारुकांजिकेनसुपेषितं कोष्णंप्रलेपतोहंति गंडमालांसुदारुणां नवकार्पासिकामूलंतंडुलैःसहपेषितं पक्कातुपलिकांषादेदपचीनाशनायच वानाद

योमांसमसृक्प्रदुष्टासंदूष्यमेदश्चतथाशिराश्च वृत्तो
न्नतंग्रंथिमरुत्कफोत्थंकुर्वंत्यथोग्रंथिरितिप्रदिष्टा
हिंस्रासरोरण्य मृतानभार्गीश्योनाकबिल्वागुरुकृष्ण
वंध्या गोक्षीरपिष्टासुहृतालपत्र्यांग्रंथौविधेयोनिजले
प्रलेपः जलायुकापित्तकृतेहितास्तुक्षीरोदनाभ्यांपरिषेचनं
च द्राक्षारसेनेक्षुरसेनवापिचूर्णंपिबेद्वापिहरीतकीनां
मधूकजंब्वर्जुन वेतसानांत्वग्भिःप्रदेहानवकारयेच्च
स्तेषुदोषेषुयथानुपूर्वंग्रंथौभिषक्श्लेष्मसमुत्थितेषु
स्विन्नस्यविम्लापनमेवकुर्यादं गुष्टलोहोपलवेणुदंडैः
विकंकतारग्वधकाकनांताकाकोदयातापसवृक्षमूलैः
आलेपयेत्पिंडफलार्क्कभार्गीकरंजकालामदनैश्चवि
द्वान् अमर्मजातंशमनंप्रयातमपक्वमेवापहरेद्विदार्य
देहे स्थिते वासृजिसिद्धकर्मासद्यःकृतोक्तंचविधिं
विदध्यात् यामांसकस्थःकठिनावृहत्सः स्नास्त्वेषयो
ज्याश्चविधिर्विधिज्ञैः शस्त्रेणचापाट्यसुपक्वमाशु
प्रक्षालयेत्पूयतमैःकषायैः संशोधनैस्तूंचविशोध
येच्चक्षारोत्तरैःक्षौद्रघृतप्रगाढैः शुद्धेचतैलंत्वचवा
रणीयविडंगपाठारजनीविपक्कं मेदःसमुत्थातिलक
ल्कदिग्धंकृत्वोपरिष्टाद्विगुणंपटांतं हुताशनोदोनमु
हुःप्रमृज्याल्लोहेनधीमानदहनंहितायप्रलिप्यदार्वी
मथलाक्षयावाप्रतसयास्वदनमत्रकार्यं निपात्यवा-

शस्त्रमपोह्यमेदोदहेत्स्वपक्वंलथवाविदार्य प्रक्षाल्य मूत्रेणतिलैः सकपिष्टैः सवर्चिकाद्यैर्हरितालमिश्रैः ससैंधवैः क्षौद्रघृतप्रगाढैः क्षारोत्तरैस्तेनप्रतिप्रशोध्य तैलंविदध्यादिकरंजगुंजावंशावलेपंगुदमूत्रसिद्धं जीमूतकीकोशफलैश्चदंतीतथाद्रवंतीत्रिवृतासकचैव सर्पिःकृतंहंस्यपचीप्रवृद्धांद्विधाप्रवृत्तंतदुदारवीर्यंनिर्गुंडिताजीवहिर्ष्युक्तंजीमूतकंमाक्षिकसैंधवाज्यं कर्कारुकैर्वारुकनालिकेरः प्रियालुपंचांगुलबीजचूर्णैः वातार्बुदंक्षीरघृताम्लसिद्धैः रुष्णैःसतैलैरुपनाहयेत्तु कुर्यात्तुमुख्यान्युपनाहनानिसिद्धैश्चमांसैरथवेसवारैः स्वेदंविदध्यात्कुशलश्चनाड्याः शृंगेणयुक्तंबहुशोहरेच्च वात घ्नानिर्यूहपयोम्लभावैःसिद्धंवितास्यात्वृतंपिवेद्वा स्वेदोपनाहमृदुवस्तुपथ्यं पित्तार्बुदेकायविरेचनंच विकृष्यगोदुंवरशाकगोजीपत्रैर्भृशंक्षौद्रयुतंविलिंपेत् लक्ष्णीकृतैःसर्ज्जरसप्रियंगुपत्तंगरोध्रांजनयष्टिकाद्वैः विश्वाश्चचारग्वधसोमराजीश्यामप्रयोज्याकुशलेनलेपे श्यामागिरिह्वांजलिकारसेषुद्राक्षारसेसप्तलिकारसेषु घृतंपिवेत्सिन्नकसंप्रसृद्धं पित्तार्बुदीतज्जठरीवजंतुःशुद्धस्यजंतोःकफजेर्बुदंतुरक्तेवसिक्तेतुनतोर्बुदंतत् द्रव्याणियत्तूर्द्धमधश्चदोषान् हरंतितैःकल्ककृतैःप्रदिह्यात् कपोतपारावतविड्विमिश्रैःसंकाश्यनीलैःशुकजांगलाख्यैः मूलैस्तुकाकाद

निमूलमिश्रैः क्षारमसिद्धैरथवाप्रदिह्यात् निष्पावपि
ण्याककुलत्थकल्कैः मांसैःप्रगाढैःर्दधिमस्तुयुक्तैः लेपं
विदध्यात्कृमयोयथात्रमूर्छान्विमुंचंतिचमाक्षिकास्त
अल्पावसिष्टेकृमिभिःकृतेत्रलिखेत्कृतोसंविदधीतप-
श्चात् पदव्यमूलंत्रपुताम्रसीसपट्टैःसमावेष्ट्यतदायसे
र्वा क्षाराग्निशस्त्राण्यसकृच्चदध्यात्प्राणानहिंसन्-
भिषगप्रमत्तः अफोतजातीकरवीरपत्रैः कषायपिष्टै
व्रणशोधनार्थं शुद्धेचतैलंविदधीतभार्गीविडंगपाठा
त्रिफलाविपक्वं यद्दक्षयाचोपगतानुपाकंपाकक्रमेणो
पचरेद्विधिज्ञः मेदोर्वुदंस्विन्नमथोविदार्यविशोध्यसी
व्येद्गतरक्तमाशु ततोहरिद्रागृहधूम्रलोध्रपतंगचूर्णैः
समनःशिलालैः व्रणंप्रतिध्यात्समधुप्रगाढैःकरंजतैलं
विदधीतसिद्धैः हन्युःसशारवाणियथान्हिवन्हिः अर्बु
दाचिकित्सा इतिवीरसिंहावलोकेगलगंडगंडमालापची
ग्रंथ्यर्बुदाधिकारः अथज्योतिःशास्त्राभिप्रायेणश्ली
पदरोगस्यहेतुमाह तत्प्रतीकारंच अकुलीनोविकलांग
श्चपलोघृष्टश्चजायते मनुजःमुखरोनित्यंश्लीपदीकु
जबुधभृगुनंदनैःसहितैः अथमंगलबुधभुक्तोपजनित
श्लीपदरोगवाधोपशांतयेग्रहत्रयप्रीतयेयस्ययस्यय
दुक्तं तस्यागुक्तमेवकार्यं अथश्लीपदरोगस्यकर्मवि
पाकहेतुमाह तत्प्रतीकारंच स्वगोत्रस्त्र्यभिगामीस्या

तृयोन्यांवाश्लीपदीभवेत् अस्यप्रायश्चित्तं असोनां द्रायणमेकंपयोव्रतंचकुर्यात् मदनुकल्पेनस्कवर्णंद्द्यात् पंचाशत्ब्राह्मणभोजनंकारयेत् इतिवचनात् अथक्रमप्राप्तस्यश्लीपद्रोगस्यसनिदानंचिकित्सित माह रुग्विनिश्चयात् यःसज्वरोवंक्षणजोभृशार्त्तिः शोफोनृणांपादगतःक्रमेणसःश्लीपदःस्यात् करकर्ण नेत्रशिरस्नोष्टनासास्वपिकेचिदाहुः लंघनंवमनंस्वेदं रेचनैरक्तमोक्षणैः प्रायश्लेष्महरैरुष्णैःश्लीपदंसमु पाचरेत् धत्तूरैरंडनिर्गुंडीवर्षाभूशिग्रुसर्षपैः प्रलेपः श्लीपदंहंतिचिरोत्थमपिदारुणं हितंआलेपनंनित्यंचि त्रकोदेवदारुवा सिद्धार्थकाःशिग्रुकल्कसुखोष्णोमूत्र पेषितः मंजिष्ठामधुकंरास्नासहिंस्रांसपुनर्नवां पिष्ट्वा स्नालेलेपोयंपित्तश्लीपदशांतये पलाशमूलस्वरसंविबे द्दानैलेनतुल्यांसितसर्षपाणां मूत्रेणपथ्यामरदारुवि श्वंसगुग्गुलुःश्लीपदिभिर्निषेव्यं कृष्णाचित्रकदंतीनां कर्षमर्द्धपलंपलं विंशतिश्चहरीतक्योगुडस्यतुपलद्वयं मधुनामोदकंखादेत्श्लीपदंहंतिदुस्तरं इतिवीरसिंहा वलोकेश्लीपदाधिकारः अथज्योतिःशास्त्राभिप्रायेण विद्रधिरोगस्यहेतुमाह तत्प्रतीकारंच मध्येपापग्रहयो श्चंद्रेमदनस्थिनेर्कजेजंतोः श्वासक्षयविद्रधिभिःगुल्म प्लीहादिपीडास्यात् अथपापग्रहांतर्वर्त्तमानचंद्रजनि

तद्विद्रधिनाशायचंद्रप्रीतयेपूर्वोक्तमेकार्यं अथविद्रधि
रोगस्यकर्मविपाकहेतुमाह तत्प्रतीकारंच विद्रधिःफ
लहर्त्तास्यात्मनुष्योब्राह्मणस्यतु वक्ष्यामितत्प्रती-
कारंदानहोमादिभिःपुनः यथाविभवतोवापिकुर्यात्
हेमतरुंशुभं स्निग्धंतथैवशारवाभिःसर्वतःसंस्कृतंशु
भं श्वेतवस्त्रेणसंवेष्ट्यफलैरपिसुकल्पितैः गंधपुष्पैः
समभ्यर्च्यतंदुलोपरिविन्यसेत् तंदुलानांपरीमाणंद्रो
णानांचचतुष्टयं तदर्धमथवाग्राह्यंयथाविभवतोनरः
आचार्योथविधिज्ञश्चसर्वशास्त्रार्थतत्ववित् धर्मज्ञः
सत्यवादीचकुलीनोलोकसंमतः आहूयपरयाभक्त्या
तेनपूजादिकारयेत् वनस्पतेरनपेक्षेतथापूजनादि
कं आग्नेय्यांदिशिहोमश्चसमिदाज्यतिलैर्भवेत् मं
त्रांश्चशास्त्रतोदृष्टादाताचश्रद्धयान्वितः तिलहोमो-
व्याहृतिभिरष्टोत्तरसहस्रकं यद्देवाइतिमंत्रेणाग्नौहो
मःप्रशस्यते ग्रहशांतिश्चकर्त्तव्यागृह्योक्तविधिनाततः
हुत्वातुसंस्रवत्पात्रेपात्रेन्यस्मिन्निधापयेत् तस्यैव
विद्रधिव्याधिव्याधितस्याप्रयत्नतः अग्नेरुत्तरतोभा
गेकलशस्थापनंभवेत् भद्रासनोपविष्टस्यअभिषेकं
चकारयेत् ततः शुक्लांबरधरःशुक्लगंधानुलेपनः
सुवर्णमात्रंदृक्षंतंप्रदद्यात्प्राङ्मुखायचं वस्त्रैर्गंधैःपूजि
तायरोगीस्वयमुदङ्मुखः आमंत्र्यब्राह्मणासृष्टःसर्व

प्राणिहितायच वृक्षाणामादिभूतस्तुदेवानांप्रीतिवर्द्ध
नः फलचौर्येणयत्प्रासंवैरूप्यंपूर्वजन्मजं सौवर्णवृक्ष
दानेनतुष्टाःसर्वाश्चदेवताः विद्रधिंनःशरीरोत्थंवाह्य
माभ्यंतरंतथा विनाशयंतुसकलंस्वास्थ्यंकुर्वंतुसर्वदा एवं
दत्वातुतद्दानमाचार्यायातिभक्तितः शनैःशनैःपदंद
त्वाप्रणिपत्यविसर्जयेत् अन्येभ्योब्राह्मणेभ्यश्चदद्या
च्छक्त्यातुदक्षिणां ब्राह्मणान्भोजयित्वातुस्वयंभुंजीत
बंधुभिः इतिविद्रधौआम्रदानविधिः अथक्रमप्राप्त
स्यविद्रधिरोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्च
यात् त्वग्रक्तमांसमेदांसिप्रदूष्यास्थिसमाश्रिताः दोषाः
शनैःशनैर्घोरंजनयंत्युच्छ्रिताभृशं महाभूलंरुजावंतंवृत्तं
चाप्यथवायतं सविद्रधिरितिख्यातो विज्ञेयःषड्विध
श्चसः पृथक्दोषैःसमस्तैश्चक्षतेनाप्यसृजाथवा मु
ष्टिप्रमाणोगुल्मश्चविद्रधिश्चततःपरं गुल्मस्तिष्ठति
दोषेषुविद्रधिर्मांसशोणिते विद्रधिःपच्यतेतस्मात्गु
ल्मश्चैवनविपच्यते आध्मानवध्मसंवेगछर्द्दिहिक्का
तृषान्वितं रुजाश्वाससमायुक्तंविद्रधिर्नाशयेन्नरं हृं
दसंग्रहात् जलौकापातनंशस्तंसर्वस्मिन्नेवविद्रधौ
मृदुर्विरेकोलघ्वन्नंस्वेदःपित्तांतरंविना वातघ्नौषध
कल्कैस्तुवसातैलघृतप्लुतैः स्फरवोष्णोवहलोपेतःप्र
योज्योवातविद्रधौ स्वेदोपनाहःकर्त्तव्यःशिग्रुमूलसम

न्वितः यवगोधूममुद्गैश्चभिन्नपिष्टैःप्रलेपयेत् वि
लीयतेक्षणेनैवअपक्वश्चैवंविद्रधिः पैत्तिकः शर्कराला
जामधुकैःसारिवायुतैः प्रदिह्यात् क्षीरपिष्टैर्वापय-
स्योशीरचंदनैः पिवेद्वात्रिफलाक्काथंत्रिवृत्ताकल्कसं
युतः इष्टिकासिकतालोहगोशकृत्तिलपांशुभिः गो
मूत्रपिष्टैःसततंस्वेदयेत्श्लेष्मविद्रधौ सौभांजनिक
निर्यूहाहिंगुसैंधवसंयुतः अचिराद्विद्रधिंहंतिप्रातः
प्रातर्निसेवितः श्वेतवर्षाभुवोमूलंमूलंवरुणकस्यच
जलेनक्काथितंपीतमपक्वंविद्रधिंजयेत् कासीससैंध
वशिलाजतुहिंगुचूर्णमिश्रीकृतोवरुणवल्कलजःक
षायः अभ्यंतरोत्थितमपक्वमतिप्रमाणंनृणामयंज
यतिविद्रधिमुग्रशोफं अपक्वेत्वेतदुद्दिष्टापक्वेतुव्रण
वत्क्रिया इतिवीरसिंहावलोकेविद्रधिचिकित्सा
संपूर्णः अथक्रमप्राप्तस्यव्रणरोगस्यज्योतिःशास्त्रा
भिप्रायेणहेतुमाह तत्प्रतीकारंच यथोक्तंजातके
व्रणितांगस्त्रीलोलश्चोरःक्रांतःस्मृसंमतःस्त्रीणां
भौमशशांकसुरेज्यैःएकत्रस्थैश्चंडशेषश्च भौमदृशा
यामपिव्रणोद्भवइतिदर्शनात् अन्यच्च कौमारदार
माढ्यंहेमालंकारभूषितंप्राज्ञं भूरंसव्रणगात्रंरुधि
रांगनिरीक्षितोजीवः भूस्रुतशशिगुरुसंयोगजनि
तव्रणवेदनाविघातायग्रहप्रीतयेपूर्वोक्तमेवंकार्यं॥

भौमविलोकितगुरुकृतव्रणशांत्येगुरुपूजादिकंकार्य-
पूर्वोक्तं अथकर्मविपाकेहेतुमाह जलाग्न्युद्बंधनादीनि-
मित्तेनयोमृयतेसउदरव्रणीभवति गोद्वयंदद्यात् ब्राह्मण
भोजनंकारयेत् पंचाशत्दक्षिणांचदद्यात् तथाच अ
तिमानादतिक्रोधादतिस्नेहात्भयादपि योधर्मनिश्चयं
ज्ञानन्यथाकुरुतेतुयः सपूयशोणितवहव्रणीभवतिमा
नवः तत्शांतयेतसकृच्छ्रंकुर्यात्तिलप्रस्थदोभवति दर्भा
ज्यतिलैर्व्याहृतिभिरष्टोत्तरसहस्रंजुहुयात् पंचाशद्ब्रा
म्हणभोजनंतुकारयेत् तथाच महाफलतस्करःपाद
व्रणीभवति तथाच यश्चांडालादिवचःशृण्वन्स्वयंभुं
क्तेसपित्तोद्रेकाद्व्रणवान्भवति सकृच्छ्रातिकृच्छ्रंकुर्यात् य
थाविभवंतिलान्दद्यात् सर्पिर्मधुयुतचाष्टोत्तरशतंहोम
कुर्यात् यदुक्तं यमसूक्तेन विप्रेंद्राःसर्पिषामधुसंयु
तं जुहोत्यष्टोत्तरशतंयमप्रीत्यर्थमेवहि पित्तोद्रेके-
विधिः पलेनवातदर्द्धेनतदर्द्धार्द्धेनवापुनः कारयेद्वा
हनंहैमंचतुर्दंतंचवारणं दंताःस्वर्णमयाःकार्यारत्नैर्ना
नाविधैर्युताः सर्वाभरणसंयुक्तंकरिणंचोपकल्पयेत्
यत्रसर्वप्रदेयंहितस्यपार्श्वेसमाहितः निदध्यात्विधि
वस्प्राज्ञःसर्वव्रणविशुद्धये उपचारैःषोडशभिरर्चयेद्
धपुष्पकैः ततोब्राम्हणमाहूयसर्वशास्त्रार्थकोविदं
श्रुतवृत्तोपसंपन्नमनुद्वेगकरंनृणां भक्त्यासंपूज्यव

स्वाद्यैर्होमं तेन च कारयेत् मंत्रैः पौराणिकैः सम्यक् संहिताशास्त्रकोविदैः चत्वारो दिग्गजा येच पुष्पदंताद यश्चये सार्वभौमादयो येच आहूतास्तोषयामितान् समि दाज्यतिलैर्होमो गजस्य प्रीतये भवेत् तस्मै हुतवते सम्यक् ब्रणीप्रीत्यर्थमाहृतः मंत्रेणानेन विधिवत् दद्याद्भक्तिस मन्वितः शङ्खमुखः सब्रणीउ दङ्मुखायेंद्रस्य वाहनं दद्या त् ऐरावतश्चतुर्दंतोगजानां नायकः स्वयं दिग्दंतिनां- पूज्यतमः ब्रणं क्षपयतु मम तु अनं तरमनुब्रज्यतमाचार्यं मुदान्वितः ब्राह्मणान् भोजयि- त्वा च स्वयं भुंजीत वाग्यतः एवं कृते ब्रणव्याधिस्तत्क्षणा देव नश्यति तैः सर्वैर्ब्रणिभिर्नूनं कार्यमारोग्यहेतवे इति सर्वब्रणघ्नगजदानविधिः परब्रतभेदी ब्रणकीलकी भ वति सूक्ष्मच्छिद्रं कृत्वा आयसं दद्यात् चर्मकीलकब्रपारोगे सशोफसनिदानं चिकित्सितमाह रुग्विनिश्चयात् एकदेशोत्थितः शोफो ब्रणानां पूर्वलक्षणं षड्विधः स्या त् पृथक् सर्वैर्दोषैस्त्वागंतुजस्तथा शोफाः षडेते वि- ज्ञेया प्रागुक्तैः शोफलक्षणैः विशेषः कथ्यते चैषां पक्वाप क्वविनिश्चये विषमं पच्यते वातात् पित्तोत्थश्चाचिरं चिरा त् कफजः पित्तजः शोफो रक्तजंतुसमुद्भवः मंदोष्मता- ल्पशोफत्वं काठिन्यं त्वक्सवर्णता मंदवेदनता चैव शोफा नामादिलक्षणं नर्त्तेनिलाद्रुग्नविनाच पित्तं पाकः कफंचा

पिर्विनानयूपः तस्माद्धिसर्वपरिपाककालेदोषैस्त्रिभि
र्जनितगदाधिपाकं कक्षंसमासाद्ययथैववन्हिःवातेरितः
संदहतिप्रसह्य तथैवपूयोप्यविनिसृतोहिमांसंशिराःस्ना
युन्वरवादतीह आदौविम्लापनंकुर्यात्द्वितीयमवसेचनं
तृतीयमुपनाहंचचतुर्थपाटनक्रियां पंचमंशोधनंकुर्या
त्षष्ठंरोपणमिष्यते एतेक्रमाव्रणप्रोक्ताःसप्तमंवैकृता
पहं अभ्यज्यस्वेदयित्वातुवेणुनाम्वततःशनैः विम्ला
पनार्थंगृन्हीयात्तलेनांगुष्टमेववा रक्तावसेचनंकुर्यादा
दावेवविचक्षणः शोफोमहतिसंरब्धोवेदनावतिवाव्र
णः योनयातिशमंलेपैःस्वेदसेकाचतर्प्पणैः सोपिना
शंव्रजत्याशुशोफःशोणितमोक्षणात् एकतश्चक्रियाःस
र्वारक्तमोक्षणमेकतः रक्तंचविक्रियायातितद्धन्नास्ति
नचातिरुक् हरत्यष्टांगुलंतुंबीभृंगंचद्वादशांगुलं शिरा
सर्वांगजंरक्तंजलौकाग्रंथिमुद्धृतं तुंबीकफोथवातो
त्थेभृंगीपित्तेजलौकसं संन्निपातोत्थितेनाडीबहुदो
षेप्रयोजयेत् मातुलिंगाग्निमंथोचसुरदारुमहौषधं
अहिंस्राचैवरास्नाचप्रलेपोवातशोफजित् दूर्वानल
कमूलंचमधुकंचंदनंतथा शीतलैश्चगणैःसर्वैःप्रलेपः
पित्तशोफहा न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः
सर्पिर्मिश्रप्रलेपःस्यात्शोफनिर्वापणःपरः अजगंधा
श्वगंधाचकालासरलयासह एकैषिकाचभृंगीचप्रले

पः सूक्ष्मशोफहा नरात्रौलेपनंदद्यात् दत्तंचपातयेत्त
था नचपर्युषितंशुष्यमाणंनैवचधारयेत् सतिलासाति
सीवीजादध्यम्लसक्तुपिंडकाः सकिण्वकुष्टलवणः
शस्तास्युरुपनाहने शणमूलकशिग्रूणांफलान्यासित
सर्षपाः सक्तवःकिण्वमुष्णानिद्रव्याण्येतानिपाचने
हस्तिदंतंजलेघृष्टंबिंदुमात्रंप्रलेपनात् अत्यर्थकठिने
वापिशोफेपाचनभेदनं चिरबिल्वाग्निकोदंतीचित्रको
हयमारकः कपोतकंकगृध्राणांपुरीषाणिचदारणे जीं
वंतिक्षारद्रव्याणिक्षारोवादारुणंपरं ततःप्रक्षालिते
क्वाथःपटोलीनिंबपत्रजः आलेपःपूतिमांसानांमांस
स्थानामरोहतां कल्कःसरोहणकार्यःतिलानांमधुना
न्वितः निंबपत्रमधुभ्यांतुयुतःसंशोधनःस्मृतः निंब
पत्रंतिलादंतीचित्रकंहयमारकं दुष्टव्रणप्रशमनोले
पःशोधनकेसरी मधुयुक्ताशरःपुंखासर्वव्रणप्ररोहणी
व्रणान्संशोधयेद्वर्तीसूक्ष्म्यासंध्यास्थिमर्मगान् अभ
यात्रिवृतादंतीलांगलीमधुसैंधवैः सुषवीपत्रधत्तूर-
कर्णपोटकुठेरकाः पृथगेतेप्रलेपेनगंभीरव्रणरोपणः
पंचवल्ककचूर्णैर्वाशुक्तिचूर्णसमायुतैः धातुकीरोध्र
चूर्णैर्वातथारोहंतितेव्रणाः निंबपत्रवचाहिंगुसर्पिर्ल
वणसैंधवैः धूपनंकृमिरोगघ्नंव्रणकंडूरुजापहं अग्नि
दग्धव्रणेसम्यक्प्रयुंजीतचिकित्सकः पित्तविद्रधि

वीसर्पशमनंलेपनादिकं वाताभिभूतान्सरक्तांश्चधू
पयेदुग्रवेदनान् यवाज्यभूर्ज्यमदनंश्रीवेष्टकसराल्है
यैः करंजारिष्टनिर्गुंडीरसोहन्याद्व्रणकृमीन् लसु
नेनाथवाद्यात्लेपनंकृमिनाशनं येक्लेदपाकस्रु
तिगंधवंतोव्रणामहांतःसरुजःसशोफाः प्रयांतितेगु
ग्गुलुमिश्रितेनपीतेनशांतिंत्रिफलारसेन त्रिफला
गुग्गुलुः जातीनिंबपटोलपत्रकटुकादार्वीनिशासारि
वा मंजिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः
समैः सर्पिःसिद्धमनेनसूक्ष्मवदनामर्माश्रिताःश्रावि
णोगंभीराःसरुजोव्रणाःसगतिकाःशुध्यंतिरोहंतिच
इतिजात्याद्यंघृतं मनःशिलासमंजिष्ठासलाक्षार
जनीद्वयैः प्रलेपःसघृतःक्षौद्रःत्वग्विशुद्धिकरःपरः
अयोरजःसकासीसंत्रिफलाकुसुमानिच प्रलेपःकुरुते
कार्ष्ण्यंसद्यएवनवत्वचि कालीयकफलाम्रास्थिहेम
कालारसोत्तमैः लेपःसगोमयरसःसवर्णकरःपरः इ
तिशोफचिकित्सा सद्यःक्षतंव्रणंवैद्यःसशूलंपरिषे-
चयेत् यष्टीमधुकयुक्तेनसर्पिषामाक्षिकेणतु मत्वागं
तुव्रणंवैद्योघृतक्षौद्रसमन्वितः शीताक्रिया प्रयोक्तव्या
पित्तरक्तोष्मनाशनी आमाशयस्थेरुधिरेवमनंपथ्य
मुच्यते पक्वाशयस्थेदेयंचरेचनंचसमासतः क्वाथोवं
शत्वगेरंडश्वदंष्ट्राश्मभिदाकृतः सहिंगुसैंधवःपीतः

कोष्टस्थंश्रावयेदसृक् यवकोलकुलुत्थानांनिस्नेहेन रसेनवा भुंजीतान्नंयवागूंवापिबेत्सैंधवसंयुतं इति सप्ताहिकःप्रोक्तःसद्योव्रणहितोविधिः सप्ताहात्परतः कार्याशरीरव्रणवत्क्रिया व्रणेभ्वयथुरायासात्सचराग श्चजागरात् तीव्ररुक्तर्वादिवास्वापात्तेभ्यमृत्युश्चमैथु नात् सद्योव्रणचिकित्सा आदौभग्नंविदित्वातुसे चयेत्शीतवारिणा पंकेनालेपनंकुर्यात् इंधनंचकुशा न्वितं आलेपनार्थेमंजिष्टामधुकंचाम्लपेषितं शत धौतघृतोन्मिश्रंशालिपिष्टंचलेपनं न्यग्रोधादिकषा यंतुसशीतंपरिषेचनं पंचमूलीविपक्कंतुक्षीरंदद्यात्स वेदने सुखोष्णमवचार्यवाचक्रतैलंविजानता गृष्टी क्षीरंससर्पिष्कंमधुरोषधसाधितं संधिभग्नेचमाक्षी कंपिबेत्क्षीरेणमानवः मूलंभृगालविन्नायास्त्वामा सरसेनतु तत्चूर्णीकृत्यसप्ताहादस्थिभंगमपोहति आभाचूर्णमधुप्लुतंअस्थिभंगेत्र्यहंपिबेत् पीताचापि भवेत्सम्यक्वज्रसारनिभंदृढं लवणंकटुकंक्षारंअम्लं मैथुनपानकं व्यायामंनचसेवेतभग्नोरूक्षान्नमेवच

इतिभग्नाधिकारः यःशोफमाममइतिपक्कमुपेक्षते योयोवाव्रणःप्रचुरपूयमसाधुवृत्तः अभ्यंतरंप्रविशति प्रविदार्यतस्यस्थानानिपूर्वविहितानिततःसपूयः तस्यातिमात्रगमनाद्गतिरिष्यतेतुनाडीवयहहतितेे

नमतातुनाडीनाडीनांगतिमन्विष्यशस्त्रेणोत्पाट्यकर्मवित्
सर्वंव्रणक्रमंकुर्यात् शोधनंरोपणादिकं नाडीवातकृ
तांसाधुपाटितांलेपयेद्भिषक् प्रत्यक्पुष्पीफलयुतैस्ति
लैःपिष्टैःप्रलेपयेत् पैत्तिकांतिलमंजिष्ठानागदंतीनिशा
द्ययैः श्लेष्मिकींतिलयष्ट्याह्वनिकुंभारिष्टसैंधवैः
शल्यजांतिलमध्वाज्यैर्लेपयेत्छिन्नशोधितां आरग्वध
निशाकालाचूर्णाज्यक्षौद्रसंयुता सूत्रवर्तिर्व्रणेयोज्या
शोधनीगतिनाशिनी वर्तीकृतंमाक्षिकसंप्रयुक्तंनाडी-
घ्नसुक्तंलवणोत्तमंच दुष्टव्रणेयद्विहितंचतैलंतत्सेव्य-
मानंगतिमाशुहंति जात्यर्कशम्याककरंजदंतीसिंधू
त्थसौवर्चलयावशूकैः वर्तिःकृताहंत्यचिरेणनाडींस्नु
कृक्षीरपिष्टासहसैंधवेन कृशदुर्बलभीरूणांनाडीम
र्माश्रितातुया क्षारसूत्रेणतांछिंद्यान्नशस्त्रेणकदाच
न गुग्गुलुस्त्रिफलाव्योषैःसमांशैश्चाज्ययोजितैः
नाडीदुष्टव्रणंचाशुभगंदरविनाशनः समूलपत्रांनिर्गु
डींपीडयित्वारसेनतु तेनसिद्धंसमंतैलंनाडीदुष्टव्रणा
पहं इतिवीरसिंहावलोकेनाडीव्रणाधिकारः अ
थभगंदररोगस्यज्योतिःशास्त्राभिप्रायेणहेतुमाह
तत्प्रतीकारंचयथोक्तंजातके कुष्टभगंदररोगैःअ
भिभूतंकृशजीवितंजनयेत् सर्वारंभविहीनंजनयति
कितवंसदादुष्टं अपरंच रोगैःभगंदराद्यैःसंतप्तावं

धुभिः सहविरुद्धः कर्कटकेदिननाथेभौमेनानिरी क्षितोरविस्कृतः अन्यत्च कुष्टकंडूविकारेश्चक्ष यकुष्टभगंदरैः गज्ञादिवाहनभयंभवेच्चंद्रांतगेबुधे अ थप्रथमश्लोकशनेश्चरस्यपठितत्वात् अथाष्टमस्था नस्थशनिजनितभगंदररोगबाधोपशांतयेशनिप्रीत येपूर्वोक्तमेवजपहोमादिकंस्नानंसकलमपिकुर्यात् तथाच कर्कटराशिस्थितभौमावलोकितरविशनि- जनितभगंदररोगोपशांतयेरविप्रीतयेपूर्वोक्तमेवज पहोमादिकंकुर्यात् तथाच चंद्रदशांतर्वर्तमानबु धजनितभगंदररोगोपशांतयेचंद्रस्यपूर्वोक्तमेवज पहोमादिकंकुर्यात् तेनोपशांतिर्भवति अथभगं दररोगस्यकर्मविपाकेहेतुमाह तत्प्रतीकारंच पूर्व जन्मनिराज्ञाधर्मनिश्चयार्थंपुरोहितःप्रहितःसद्रव्यं गृहीत्वायथावद्धर्मनानिश्चिनोतिसभगंदररोगवान्भ वति तदुक्तमादित्यपुराणे योगृहीत्वाद्विजोमोहान्नि युक्तोधर्मनिश्चये भगंदरीभवेत्तस्यत्द्धर्मंवदतोमु खात् सहिरण्यंवस्त्रंरत्नधान्यादिभूमिंब्राह्मणेभ्यो भोजनंचदद्यात् ततोरोगान्मुक्तोभवति दुष्टव्रणाना मप्येवं पद्मपुराणे आचार्यभार्यागमनेभगंदरयु तोभवेत् यथाहवृद्धबौद्धायनः गौतमश्च माणि क्यंपद्मरागंचवज्रंवैडूर्यमेवच मौक्तिकंपुष्परागंच

सम्यकुंमरकतंतथा हरितंवनवेतानिस्वर्णपात्रोपरि
न्यसेत् अथवाराजतेताम्रेग्रहान्मंत्रैःप्रपूजयेत् नव
ग्रहाणांप्रीत्यर्थंब्रह्मणानिर्मितंपुरा गंधपुष्पाक्षतेर्धूपै
र्नैवेद्यैस्तान्प्रपूजयेत् स्वलिंगैश्चैवमंत्रैश्चहोमःकार्य
श्चपूर्ववत् ग्रहयज्ञोक्तमार्गेणेत्यर्थः ततोब्राह्मणमा
हूयसर्वशास्त्रार्थकोविदं आदित्यादिग्रहाःसर्वेनवर
त्नप्रदानतः विनाशयंतुमेदुःखंक्षिप्रमेवभगंदरं अनेन
कर्मणाभूतंयथावद्विहितेनतु नरोनैरुज्यमाप्नोतिनिः
संदिग्धंभगंदरी इतिभगंदरेनवरत्नदानविधिः अ
थक्रमप्राप्तस्यभगंदररोगस्यसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् गुदस्यद्व्यंगुलेक्षेत्रेपार्श्वतःपिटकार्ति
कृत् भिन्नोभगंदरोज्ञेयःसचपंचविधोभवेत् कटीक
पालनिस्तोदद्दाहकंडुरुजादयः भवंतिपूर्वरूपाणिभ-
विष्यतिभगंदरे वृषणासनयोर्मध्यप्रदेशोभगउच्य
ते तदेवदारयत्यस्माद्भगंदरइतिस्मृतः वातमूत्रपुरी
षाणिकृमयःशुक्रमेवच भगंदराच्चवंतश्चनाशयंति
तमातुरं अथवृंदसंग्रहात् गुदस्यश्वयथुंदृष्ट्वावि-
शोष्यशोधयेत्ततः रक्तावसेचनकार्यंयथापाकंनग
च्छति वटपत्रेष्टिकाशौंडीगुडूच्यासपुनर्नवा सुपि-
ष्टाःपिटकावस्थेलेपःशस्तोभगंदरे पिटिकानामप
क्कानामपतर्पणपूर्वकं कर्मकुर्याद्विरेकांतंभिन्नानां

वक्ष्यतेक्रियाः तृवृत्तिलानागदंतीमंजिष्ठासहसर्पिषा उत्सादनंभक्तियुक्तंसैंधवक्षौद्रसंयुतं रसांजनंहरिद्रेद्वे- मंजिष्ठानिंबपल्लवाः तैलंघृतंवातस्यक्तंभगंदरविनाशनं स्नुह्यर्कदुग्धदार्वीभिः वर्त्तिंकृत्वाविचक्षणः दुष्टांसर्वशरीरस्थांनाडींहन्यान्नसंशयः तिलाभयाकुष्टमरिष्टपत्रंनिशाद्वचारोध्रमगारधूमः भगंदरेनाड्युपदंशयोश्चदुष्टव्रणे शेपणशोधनोयं त्रिफलारससंयुक्तांविडालास्थिप्रलेपनं भगंदरंनिहंत्याशुदुष्टव्रणहरंपरं स्थावचालांगलीनांहरितालस्फवचिकां ज्योतिष्मतींचसंहृत्यतैलंधीरोविपाचयेत् एतद्धिस्यंदननामतैलंदद्याद्भगंदरे शोधनं शेपणंचैवदुष्टनाडींव्यपोहति करवीरनिशादंतीलांगली लवणादिभिः मातुलिंगार्कपयसापक्वंतैलंभगंदरे करवीराद्यंतैलं व्यायाममैथुनंयुद्धंपृष्टयानंगुरूणिच संवत्सरंपरिहरेत्उपरूढव्रणोनरः इतिवीरसिंहावलोकेभगंदराधिकारः अथक्रमप्राप्तयोरुपदंशशूकयो- र्ज्योतिःशास्त्राभिप्रायेणहेतुमाह तत्प्रतीकारंच यथोक्तंजातके अंतर्दशायांभुक्तस्यशनिनोयदाभवति नखदशनशिश्नरोगैःसहभवतिचकामलारोगैः अथशुक्रदशावर्त्तमानचंद्रजनितोपदंसशूकदोषोपशांतयेचंद्रप्रीतयेपूर्वोक्तमेवकुर्यात् अथोपदंशशूकरोगयोकर्मविपाकहेतुमाह तत्प्रतीकारंच मातृगामी

भवेद्यस्तु लिंगं तस्याधिनस्यति तस्य प्रतिक्रियां कर्तुं लिं
गमुत्तरतोन्यसेत् कृष्णवस्त्रसमाछन्नं कृष्णमाल्यविभू
षितं तस्योपरिक्षिपेत् कांस्यपात्रे देवं धनेश्वरं सुवर्णनि
ष्ककर्षेन निर्मितं नरवाहनं यजेत्पुरुषसूक्तेन धनदं विष्णु
रूपिणं अथवेदं चविप्राय अथर्वाणं समापयेत् सु
वर्णपुत्रिकां कृत्वा निष्कविंशतिसंख्यया दद्याद्विप्राय सं
पूज्य निष्कं पथ्यमितिब्रुवन् निधीनामधिपो देवः शंकर
स्य प्रियः सखा सौम्याशाधिपतिः स्वामी मम पापं व्यपो
हतु इदं मंत्रं समुच्चार्य आचार्याय यथाविधि दद्याद्देवं
धनेशं तु लिंगनाशे तु सिद्धये इत्युपदंशभूकरोगहरोध
नददानविधिः क्रमप्राप्तस्योपदंशभूकरोगयोः सनि
दानं चिकित्सितमाह रुग्विनिश्चयात् हस्ताभिघाता
न्नखदंतपातादधावनादत्युपसेवनाच्च योनिप्रदोषाच्च
भवंति शिश्ने पंचोपदंशा विविधोपचारैः वृंदसंग्रहात्
स्निग्धस्विन्नस्य मेढ्रादौ ध्वजमध्यशिरव्यधः जलौकः
पातनं च स्यात् सद्यश्चाधः शोधनं तथा पाकोरक्ष्यः प्रयत्नेन
शिश्नक्षेपकरो हि सः पटोलनिंबत्रिफलागुडूचीक्वाथं
पिबेद्वा खदिरासनाभ्यां सगुग्गुलुं वा त्रिवृतायुतं वा स
र्वोपदंशापहरः प्रयोगः त्रिफलायाः कषायेण भृंगराज
रसेन वा व्रणप्रक्षालनं कुर्यात् उपदंशप्रशांतये दहेत्क
टाहे त्रिफलां समांशां मधुसंयुतां उपदंशे प्रलेपोयं सद्यो

रोहयतिव्रणं जपाजात्यश्वमारार्कशम्याकनादलैः पृ
थक् कृतंप्रक्षालनेक्वाथंमेढ्रपाकेप्रयोजयेत् करंजनि
म्बार्जुनशालजंबूवटादिभिःकल्ककषायसिद्धं सर्पिर्नि
हन्यादुपदंशदोषंसदाहपाकंश्रुतिरागयुक्तं इतिवीरसिं
हावलोकेऽपदंशाधिकारः अथक्रमप्राप्तस्यशूकरोग
स्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् अ
क्रमाच्छेफसोवृद्धिंयोभिवांछितमूढधीः व्याधयस्तस्य
जायंतेदशचाष्टौचशूकजाः गौरसर्षपसंस्थानाःशूकनि
र्भुक्तहेतुकाः पिटिकाश्लेष्मवाताभ्यांज्ञेयाःसर्षपिका
स्तुताः जलेजंतुविशेषःस्यातशूकोलिंगविवृद्धिकृत् न
द्योगादपरेधिस्युःप्रयोगाःशूकसर्ज्जिकाः हितंचसर्पि
षःपानंपथ्यंवापिविरेचनं हितंशोणितमोक्षश्चयथा
पिलघुभोजनं शूकरोगंहरेद्रक्तंपक्वेशोधनरोपणं त्रि
कटु त्रिफलारोध्रैःलेपस्तैलंचरोपणं इतिवीरसिंहा
वलोकेशूकाधिकारः अथक्रमप्राप्तस्यकुष्टरोगस्य-
ज्योतिःशास्त्राभिप्रायेणहेतुमाह तत्प्रतीकारंच य
थोक्तं छिद्रस्थराहुमार्त्तंडौकुष्टरोगप्रदायकौ महाकु
ष्टकरस्ताभ्यांसंगतोमंगलःपरं भौमदशायांलभतेनृपा
ग्निचौराहवादिरिपुमर्द्दान्मूर्छाशोणितदोषाःशारवाछे
दोव्रणश्चापि तथाच कुत्सितचारिनकुष्टीसितार्कर
विसुतैःसहितैः अपरंच कुत्सितरामाभर्त्ताबहुशत्रुः

क्षीणबांधवोदीनः भौमगृहेसितदृष्टेदिवसकरेजाय
तेकुष्टी तथाच कुष्टभगंदररोगैरभिभूतोऽल्पजीव
तंनिधने सर्वारंभविहीनंजनयतिकितवंसदापुरुषं
अपरंच दुर्नामकुष्टरोगैरभिभूतोनिर्दयोविगतलज्जः
सिंहेतिमिरविशेषेशक्रेणनिरीक्षतेजातः अन्यत्र नी
चस्थितस्यरवेर्दशायामप्येवंचंद्रदशायांवर्तमानेबुधे·
प्येवं कुष्टकंडूविकारैश्चेतिदर्शनात् अष्टमस्थानस्थ
राहुसूर्यजनितकुष्टरोगप्रतीकाराय रविराहुप्रीतये
यथोक्तमेवजपादिकंकुर्यात् तत्संगतमंगलस्याप्येवं
कार्यंशुक्रादित्यशनिसंयोगात्कुष्टदर्शनेग्रहप्रीतये·
यथोक्तमेवपूर्ववत्कुर्यात् भौमगृहवर्त्तमानशुक्रावलो
कितभानुजनितकुष्टरोगप्रतीकारायरविप्रीतयेजपादि
कंविधिवत्कुर्यात् निधनस्थशनिजनितकुष्टरोगप्रती
कारायशनिप्रीतयेउक्तविधानंकार्यं सिंहस्थशक्रेक्षि
तरविजनितकुष्टरोगप्रतीकारायरविप्रीतयेउक्तमेवकुर्या
त् नीचस्थरवेर्दशायांकुष्टदर्शनेप्येवं अथक्रमप्राप्त·
स्यकुष्टरोगस्यकर्मविपाकेहेतुमाह तत्प्रतीकारंच तत्रजं
तुघातकःकुष्टरोगी वस्त्रहारीश्वेत कुष्टीभवतिसशां
तपनंकुर्यात् योनरोहंतिवैजंतूनकुष्टरोगीभवेत्तुसः स
चशांतपनंकुर्यात्भगवानाहशंकरः इतिवचनात्
अन्यायदंडकारीचमुखकुष्णोभवति असौकृच्छ्रातिकृ

छ्रांकुर्यात् क्षुद्रप्राणिहिंसकोविवर्णमुखः सचांद्रायण
मतिकृच्छ्रंकुर्वीत तथाच वायुपुराणे कुष्टीस्तेयीनरोभ
वति अथकुष्टहरंवक्ष्येवृषभंदानमुत्तमं यःकुर्यात्कुष्ट
रोगार्तःशरीरस्यसुखकारकं पलैस्त्रिभिःप्रकुर्वीत द्वाभ्या
मेकेनवापुनः राजतंदृषभंशुभ्रंहेमशृंगविभूषितं महेश्व
रेणोमयाचप्रकुर्यात्तमधिष्टितं सौवर्णप्रतिमेद्वेतुपूर्वोक्ते
नक्रमेणतु यथाविभवमानेनवित्तशाठ्यंनकारयेत्
पलाष्टकेकांस्यपात्रेस्थापयेत्तंविचक्षणः श्वेतपुष्पैरक्ष
तैश्चश्वेतवस्त्रैरलंकृतः ब्राह्मणंवेदसंपन्नंस्वाचारंसंय
तेंद्रियं सर्वशास्त्रप्रवक्तारंप्रतिग्रहपराङ्मुखं दीनंकुली
नंधर्मज्ञंअनुद्वेगकरंनृणां क्रोधलोभविहीनंचसर्वशा
स्त्रार्थकोविदं गृहमाहूयभक्त्यातंयथाविधिसमर्चये
त् केयूरमुकुटैर्वस्त्रैर्मांगल्यैश्चांगुलीयकैः होमश्चपूर्व
वत्कार्यःउमामहेश्वरेतथा उदङ्मुखोपविष्टायमहा
देवस्यसंनिधौ प्राङ्मुखोअधितोदद्यात्मंत्रेणानेनध
मंतः अष्टमूर्तेर्महेशानकृपयावृषभध्वज श्वेतमोदुव
रंसर्वमथवाश्वेतमेवच त्रिदोषजनितंयच्चमंडलान्यथ
वानघ पूर्वकर्मविपाकोत्थंपार्वतीनाथसर्वग कुष्टहाभ
वसर्वेशरक्षमांपार्वतीपते इतिकुष्टहरवृषभदानवि
धिः विशेषांतरमपि ब्रह्महानरकस्यांतेपांडुकुष्टीप्र
जायते प्रायश्चित्तंप्रकुर्वीतयथोक्तमृषिभाषितं अ

श्वेतकुष्टस्यजातकाभिप्रायेणहेतुंप्रतीकारंच शिर
सोरुग्गलरोगः श्वित्रं सहसाज्वरं शूलं तपनदशायांभु
क्तेदेशत्यागोभवेदरिभिः अथसूर्यदशायांवर्त्तमानबुध
जनितदद्रुविचर्चिकापामाद्युपशांतयेपूर्वोक्तविधिव
दादित्यप्रीतयेजपहोमादिकंकुर्यात् अथदद्रुविचर्चि
कादीनांकर्मविपाकेहेतुमाह तत्प्रतीकारंच स्वर्णा
पहारीकुष्टीदर्द्रुणोवाजायते अग्न्युत्सादीमंडलकुष्टी
भवति कच्छवनदाहीदर्द्रुणः बौद्धायनः ब्राह्मणंतु
भार्योर्हन्याद्दर्द्रुरोगीभवेत्तुसः तस्योपशमनंवक्ष्येसुवर्णे
नतुकारयेत् तदर्द्धेनतदर्द्धेनतदर्द्धार्द्धेनवापुनः उमाम
हेश्वरंरूपंवृषभेणप्रतिष्ठितं चतुर्भुजंच द्विभुजामुमांकु
र्याद्विचक्षणः एकवक्त्रोभवेत्शंभुःत्रिनेत्रश्चमहाभुजः
अक्षमालात्रिशूलंच तस्यदक्षिणहस्तयोः देवीपृष्ट-
गतोह्येकोवरदश्चापरःकरः वामोत्संगगतादेवीस्थितः
पृष्टेकपाणिना वृषभोप्यग्रतःकार्यः घंटयालंकृतस्त
था स्वशक्त्यावित्तशाठ्यंतुकुर्वतोनिःफलंभवेत् तत्रा
प्यारोप्यदेवेशंउमयासहितंप्रभुं वस्त्रमाल्यैस्तथागं-
धैर्मूलमंत्रेणपूजयेत् ततोब्राह्मणमाहूयदरिद्रंधर्मको
विदं श्रुतवृत्तोपसंपन्नंशांतंचैवात्मवेदिनं वस्त्रांगुली
यकैतस्यपूजांभक्त्याप्रकल्पयेत् होमंचकारयेत्तेनसमि
दाज्यतिलैरपि मंत्रश्चरुद्रगायत्रीसर्वत्रोतिविनिश्चयः

रुद्रगायत्रीलिंगपुराणे सर्वेश्वरायविद्महे शूलहस्ता
यधीमहितन्नोरुद्रः प्रचोदयात् यह्यग्नौत्र्यंबकेनैवस
मिधाजुहुयात्सुधीः रुद्रायेतिमंत्रेणजुहुयादाज्यसं
युतैः तिलैश्चमूलमंत्रेणसर्वत्रैवक्रमोभवेत् तथाब्रह्मो
द्वादशांतेमिथुनंब्राह्मणायतु शि
वयोर्विधिवद्देयं वृषभोपरिसंस्थितं शांतायवेदविदु
षेभक्त्यातुविनिवेदयेत् मंत्रेणानेनविधिवद्दद्रुरोगी-
जितात्मवान् कैलासवासीभगवान्उमयासहितःप्र-
भुः त्रिनेत्रश्चहरोदद्रुरोगमाशुव्यपोहतु दानमंत्रः
ततश्चब्राह्मणान्सम्यक्प्रणिपत्यक्षमापयेत् ब्राह्मणा
न्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः एवंदत्वामहा-
दानंदद्रुरोगात्प्रमुच्यते इतिदद्रुरोगहरउमामहेश्वर
दानविधिः अथक्रमप्राप्तस्यकुष्टरोगस्यसनिदानं
चिकित्सितमाह रुग्विनिश्चयात् विरोधीन्यन्नपा
नानिद्रवस्निग्धगुरूणिच भजतामागतांछर्दिंवेगां
श्चान्यान्प्रतिघ्नतां व्यायाममग्निसंतापंपरिषेव्य
निषेविणां शीतोष्णलंघनाहारानूक्रमंमुक्तानिषे
विणां घर्मश्रमभयार्त्तानांद्रुतंशीतांबुसेविनां अजी
र्णाध्यशनानांचपंचकर्मापचारिणां नवान्नदधिम
त्स्यादिलवणाम्लनिषेविणां माषमूलकपिष्टान्नति
लक्षीरगुडाशिनां व्यवायंचाप्यजीर्णेन्नेनिद्रांचभ-

जतांदिवा विप्रान्गुरून्धर्षयतांपापंवाकर्मकुर्वतां
वातादयस्त्रयोदोषास्त्वक्रक्तंमांसमंवुच दूषयंतिस
कुष्टानांसप्तकोद्रव्यसंग्रहः अतःकुष्टानिजायंतेसप्त
चैकादशैवतु कुष्टानिसप्तधादोषैःपृथक्द्वंद्वैःसमाग
तैः सर्वेष्वपित्रिदोषेषुव्यपदेशोधिकोन्यतः अतिश्ल
क्ष्णःखरस्पर्शःस्वेदास्वेदविवर्णता दाहकंडूस्त्वचिस्वा
पःस्तोदःकोष्टोन्नतिश्रमः व्रणानामधिकंशूलंशीघ्रो
त्पत्तिश्चिरंस्थितिः रूढानामपिरूक्षत्वंनिमित्तेल्पे
पिकोपनं रोमहर्षोसृजःकार्ष्ण्यंकुष्टलक्षणमग्रजं र
क्तकृष्णारुणस्वेदैर्वर्णैःकायेषुमिश्रितैः जायंतेगानि
शीर्यंतेकुष्टानिविविधानिच प्रसंगाद्गात्रसंसर्गान्नि
वासात्सहभोजनात् एकशय्यासनाच्चापिवस्त्रमा-
ल्यानुलेपनात् कुष्टज्वरश्चशोफश्चनेत्राभिस्यंदए
वच उपसर्गिकरोगाश्चसंक्रमंतिनरान्नरं अथवृं
दसंग्रहात् वातोत्तरेषुसर्पिर्वमनंश्लेष्मोत्तरेषुकुष्टेषु
॥ पित्तोत्तरेषुमोक्षोरक्तस्यविरेचनंश्रेष्टं प्रच्छन्नम
ल्पकुष्टेमहतिचशस्त्तंशिराव्यधनं बहुदोषःसंशोध्यः
कुष्टीवहुशश्चरक्षिताप्राणान् दोषेह्यतिमात्रहृते
वायुर्हन्यादबलमाशुदोषान् कुष्टेहृदयेवमनंकुष्टे
षुचोर्द्धभागेषु विरेचनंप्रयोक्तव्यं त्रिवृद्दंतीफलत्रिकैः
॥ एलाकुष्टविडंगानिशताह्वाचित्रकंचला दंतीरसांज

नंचेतिलेपः कुष्ठविनाशनः दूर्वाभयासैंधवचक्रमर्दकुठेर
कः कांजिकतक्रपिष्टाः त्रिभिः प्रलेपैरतिबद्धमूलां दद्रूंश्च
कंडूंश्च विनाशयंति गोमूत्रवारिसंपिष्टैः शिलातालांशतु-
त्थकैः लेपः किटिभवीसर्पकुष्टनाशायपूजितः आरग्वध
स्यपत्राणिआरनालेनलेपयेत् दद्रूकिटिभकुष्ठानिहंति
सिध्मानमेवच स्थौणेयरुग्निशादूर्वासमयारप्रलेपना
त् धत्तूररसपिष्टास्तुकंडूरसविनाशनाः कासमर्द्दनमू
लंतुसौवीरेणप्रपेषितं दद्रूकिटिभकुष्टानिजयेद्देवप्रले
पनात् वीजानिवामूलकसर्षपानांलाक्षार जन्योप्रपु
नाटवीजं श्रीवेष्टकाव्योषविडंगकुष्टंपिष्ट्वाचमूत्रेणतुले
पनंस्यात् दद्रूणिसिध्माकिटिभानिपामांकपालकुष्टं
विषमंचहन्यात् गंधपाषाणमिश्रेणयवक्षारेणलेपनं
सिध्मा नंनाशयत्याशुकटुतैलेनयोजयेत् कासमर्द्दक
वीजानिमूलकानांतथैवच गंधपाषाणमिश्राणिसिध्मा
नांपरमौषधं धात्रीरसः सर्जरसः स्रुपाक्यः सौवीरपि-
ष्टश्च तथाश्रितश्च भवंतिसिध्मानियथानभूयः तथेद
मुद्वर्त्तनकंकरोति एडगजातिलसर्षपकुष्टंमागधिकार
जनीद्वयतक्रं हंतिविचर्चिकपामादद्रूवर्षशतादपिन
श्यतिकंडूः सिंदूरगुग्गुलुरसांजनसिक्थतुत्थैस्तुल्यां
शकैः कटुकतैलमिदंविपक्वं कंडूः श्रवासिरकिनीमथवा
पिशुष्कामभ्यंजनेनसकृदुद्धरतिप्रसह्य खदिरत्रिफ

लानिंबपरोलामृतवासकैः अष्टकोयंजयेत्कुष्टंकंडू-
विस्फोटकानिव विसर्पपामाकीटभरोमांतिकमसूरिकाः
इतिखदिराष्टकं अर्कपत्ररसे पक्कंरजनीकल्कसंयु
तं कटुतेलंहरेत्चूर्णसकुलंकंडूविचर्चिकाः अर्कतेलं
मंजिष्टात्रिफलालाक्षानिशाशिलालगंधकैः चूर्णितै
स्तैलमादित्यपाकंपामाहरंपरं आदित्यपाकं मरिचाल
शिलाब्दार्कपयोश्वारिजटात्रिवृत् शकृद्रसविशालाग्नि
निशायुग्दारुचंदनैः कटुतेलंपचेत्स्वस्थंत्वक्षेर्विषफला
न्वितैः सगोमूत्रैस्तदभ्यंगादद्रूश्वित्रविनाशनं सर्वेष्वपि
चकुष्टेषुतैलमेतत्प्रयोजयेत् मरिचाद्यंतैलं धात्रीख
दिरयोःक्वाथंपीत्वावल्गुजसंयुतं शंखेंदुधवलंश्वित्रंतूर्णं
हंतिनसंशयः मथितेनपिबेच्चूर्णंकाकोदुंबर्यवल्गुजं तै
लाक्तोघर्मसेवीस्यात्तत्कार्शोश्वित्रमुद्धरेत् कुडवोवल्गु
जबीजाद्धरितालचतुर्थभागसंमिश्रः मूत्रेणगवांपिष्टः
ससवर्णकरःपरंश्वित्रं असनखदिरयूषैर्भावितांसोमरा
जींमधुघृतशिखिपक्केर्लोहचूर्णैरुपेतां शरदमदलिहानः
पारिणामानुविकारांस्त्यजतिह्रिमिताशी तद्ददाहारजा
तान् एरंडबीजंप्रपुन्नाडबीजंभल्लातकास्थित्रिफलासतु
ल्याः निरुद्धधूमंचपचेत्कटाहे कृष्णायसेतत्तिलतैल-
मिश्रं कृष्णोवर्णोनेनहिपांडुरःस्यात् रूक्ष्योविवर्णो
मलिनश्चयःस्यात् श्वित्रव्रणश्चैवविदह्यमानः क्रमेण

कृष्णात्वमुपैतिजंतोः कालेत्वग्दलसारबीजकुसुमैर्निंबस्य तुल्यांशकैः कृत्वाचूर्णमयःकटुत्रिकनिशाधात्र्यक्षपथ्या युतंपंचारिष्टमिदंपयोमधुघृतैरुष्णांबुनायःपुमान् अश्न न्कासगरप्रमेहपिटिकाकुष्ठादिभिर्मुच्यते इतिलघुपंच कंचूर्णं भूनिंबांबुदेतिवातरक्तोक्तंमहातिक्तकंघृतंच इ तिवीरसिंहावलोकेकुष्ठाधिकारः अथज्योतिःशास्त्रा भिप्रायेणशीतपित्तोदर्दकोठानांहेतुमाह तत्प्रतीकारंच तथाचत्रिग्रहयोगे आदित्यशनिदैत्येज्यैःसहैकस्थान मागतैः जन्मकालेयदायस्यजायतेशीतपित्तवान् अथै कस्थभानुशनिभृगुजनितशीतपित्तादिप्रतिकाराय ग्र हत्रयप्रीतयेपूर्ववज्जपहोमदानानिकुर्यात् अथशीत पित्तयोःकर्मविपाकेहेतावनुक्तेपिस्वल्पपापत्वात्कृच्छ्र मेकंतत्प्रत्याम्नायंवाकुर्यात्हिरण्यदानंचदद्यात् ब्राम्ह णभोजनंचकारयेत्तेनोपशांतिर्भवति अथक्रमप्राप्त स्यशीतपित्तोदर्दकोठानांसनिदानंचिकित्सितमाह रु ग्विनिश्चयात् शीतमारुतसंस्पर्शात्प्रदुष्टौकफमारुतौ पित्तेनसहसंभूयबहिरंतश्चसर्प्यतः पिपासारुचिहृल्लास कासःदेहसादांगगौरवं रक्तलोचनतातेषांपूर्वरूपस्य लक्षणं वरटीदंशसंस्थानःशोफःसंजायतेबहिः सकंडु तोदबहुलःछर्दिज्वरविदाहवान् उदर्दमितितंविद्या त्शीतपित्तमथापरे अभ्यज्यकटुतैलेनसेकश्चोष्णे

जलैस्तथा तत्रास्कुवमनंकार्यंपटोलारिष्टवारिणा
सगुडांपिप्पलींयस्तुखादेत्पथ्यान्नभुग्नरः तस्यन
श्यंतिसप्ताहाद्दुदर्द्दाःसर्वदेहजाः सिद्धार्थरजनीकल्कैः
प्रपुन्नाटतिलैःसह कटुतैलेनसंमिश्रमेतदुद्वर्त्तनंपरं
दूर्वानिशायुतोलेपःकंडूपामाविनाशनः कृमिदद्रुहर-
श्चैवशीतपित्तापहःस्मृतः निंबस्यपत्राणिसदाघृतेनधा
त्रीविमिश्राण्यपिवोपयुंज्यात् विसर्पकोठक्षतशीतपि
त्तकंडूस्रपित्तंरकतांचहन्यात् क्षारसिंधूत्थतैलेनगात्रा
भ्यंगंप्रयोजयेत् तैलोद्वर्त्तनकंदेहेयोज्यमेलादिकोगणः
शुष्कमूलकयूषेणकौलत्थेनरसेनवा भोजनंसर्वदा
कार्यंलावतित्तिरजेनवा शीतलान्यन्नपानानिमत्वा
दोषगतिंभिषक् उत्सादनानिदोषेषुशीतपित्तेप्रयोज
येत् इतिशीतपित्तोदर्दकोठचिकित्सा अथक्रमप्राप्त
स्याम्लपित्तस्यसनिदानंचिकित्सितमाह रुग्विनिश्च
यात् विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपान्नान्नभु-
जोविदग्धं पित्तं स्वदेहोपचितंपुरायत्तदम्लपित्तंप्रव
दंतिसंतः अविपाककूमोक्लेशतिक्ताम्लोद्गारगौरवैः
हृत्कंठदाहारुचिभिश्चाम्लपित्तंवदेद्भिषक् सानिलं
सानिलकफंसकफंतच्चलक्षयेत् दोषलिंगेनमतिमान्
भिषग्मोहकरंहितत् रोगोयमम्लपित्ताख्योयत्नात्सं
साध्यतेनवा चिरोत्थितोभवेद्याप्यःकृच्छ्रसाध्यःसक

स्यचित् वृंदसंग्रहात् वचनांतरंतत्रविरेकंमृदुकार
येत् सम्यक्वांतविरिक्तस्यसुस्निग्धस्यानुवासनं आ
स्थापनंचिरोद्भूतेदेयंदोषाद्यपेक्षया दोषसंसर्गजाकार्या
भेषजाहारकल्पना ऊर्द्धगंवमनैर्धीमान्अधोगंरेच
नैर्हरेत् तिक्तभूयिष्टमाहारंपाचनंवापिकल्पयेत्
यवगोधूमविकृतिस्तीक्ष्णसंस्कारवर्जिताः यथास्वं
लाजशक्तून्वासितांमधुयुतंपिवेत् निस्तुषयवधात्री
क्वाथःत्रिसुगंधंमधुयुतःपीतः अपनयतिचाम्लपित्तं
यदिभुंक्तेमुद्गयूषेण सद्राक्षामभयांखादेत्सक्षौद्रां
सगुडांचना कटुकांसितयालिह्यात्पटोलंक्षौद्रसंयु
तं रक्तश्रुतौभिषक्युक्त्वाखंडकूष्मांडयोजनं पटोल
त्रिफलारिष्टश्रितंमधुयुतंपिवेत् पित्तश्लेष्मज्वरछ
र्द्दिदाहशूलोपशांतये सिंहास्यामृतभंटाकीक्वाथं
पीत्वासमाक्षिकं अम्लपित्तंजयेज्जंतुःकासश्वा
संज्वरंवमिं शतावरीमूलकल्कंघृतप्रस्थंपयःस
मं पचेन्मृद्वग्निनासम्यक्क्षीरंदत्वाचतुर्गुणं ना
शयेदम्लपित्तंचवातपित्तोद्भवान्गदान् रक्तपित्तं
तृषांमूर्छांश्वासंसंतापमेवच अम्लपित्तेप्रयोक्त
व्यःकफपित्तहरोविधिः गुडकूष्मांडकश्चैवतथा
खंडामलक्यपि गुडक्षीरकणासिद्धंसर्पिरत्रोप
योजयेत् ज्वरार्त्तमिवचात्मानंमन्यंतेयोम्लपित्त

वान् तस्यसंशोधनपथ्यंनशांतिःशोधनंविना अवि
रोत्थेचाम्लपित्तेवमनंतत्रकारयेत् इतिवीरसिंहावलोकेअ
म्लपित्ताधिकारः अथविसर्प्परोगरोमांतिकमसूरिकादी
नांजातकाभिप्रायेणहेतुमाह तत्प्रतीकारंच निधनस्थे
दिवानाथेभूसुतेनविलोकिते विसर्प्पस्फोटरोगाश्चजा
यंतेपूर्वजन्मनः अष्टमस्थानस्थित भौमावलोकितभा
नुजनितविसर्प्पादिदोषोपशांतये भानुप्रीतयेयथोक्त
मेवजपादिकंकुर्यात् अथविसर्प्परोगाणांकर्मविपाके
हेतुमाह तत्प्रतीकारंच अमेध्यदाताविसर्प्पवान्जाय
ते सम्यसंपर्याप्तव्रतमाचरेत् बोद्धायनः सर्प्पैस्तुयःखा
दयतिसविसर्प्पीभवेन्नरः दानेनोपशमःकार्योहोमेनच
विशेषतः पलेनचातदर्द्धेनतदर्द्धार्द्धेनवापुनः कुर्यान्नागं
स्वर्णेनफणा पंचकसंयुतं माणिक्यानिचदेयानिमत्यै
कंफणपंचके रत्नंपुच्छेतथादेयंवज्रंलोचनयोस्तथा ए
वंनागंप्रभुंकृत्वाकुंकुमेनानुलेपयेत् रक्तवस्त्रेणसंवे
ष्ट्यताम्रपात्रोपरिन्यसेत् पात्रस्यचपरिमाणंपलानाम
ष्टकंविदुः उपचारैःषोडशभिरर्चयेन्नागमुत्तमं आचा
र्यःसर्वशास्त्रज्ञोधर्मशास्त्रपरायणः होमंचापिप्रकुर्वी
तसमिदाज्यतिलैःशुभैः नमोस्तुसर्पेभ्यइतित्रिभिर्मंत्रै
र्यथाक्रमं अष्टोत्तरसहस्रंतुअष्टोत्तरशतंतथा अष्टविं
शतिकंवापिपरिमाणंपृथक्पृथक् हुत्वाचाहुतिसंपातैः

पात्रेचैकीकृतंस्वयं आचार्यो गानिचाभ्यज्यरोगिणं तुर्विसर्पिणां रुग्भिस्तुसर्पिराज्ञीभिः भूमिभूम्यादि भिःक्रमात् स्वस्थोसौयथाभवतिगात्राणिचापरोगतो मुक्तानिभवंति गुग्गुलुंचसृगंधंचपुष्पदारुचनिक्षि पेत् प्रकल्पकलशेकुर्यात् अभिषेकंजलैःशुभैः नमो स्तुसर्पेभ्यइतिसार्पैस्तल्लिंगकैरपिहिरण्यवर्णापवमा नानुवाकतः आपोहिष्ठामयइतिशन्नोवातमुदीरयेत् उत्सादितांगरूचिरैर्लिपेदगरुचंदनैः ततःसमर्चयेद्धला न्नागंपुष्पाक्षतादिभिः सर्पदैवत्यमंत्रेणआचार्योपिस मर्चयेत् अनंतंसर्पराजंतुआचार्यायनिवेदयेत् योधत्ते पृथिवींकृत्स्नांसशैलवनकाननां क्षीराब्धौयस्यशय्यानं वासुदेवस्यशार्ङ्गिणः स्वीयदानेननागोसौसर्वव्याधिव्य पोहतु वैसर्पकंविकारंचत्वग्दोषजनितःतथा रक्तदो- षोद्भवंचापिमातृतःपितृतोपिवा अंगप्रत्यंगसंभूतंवि- कारंमेव्यपोहतु दानमंत्रः एवंदत्वातुतन्नागंआचार्या यसदक्षिणं भूमौप्रणम्यशिरसाशनैःशतपदंव्रजेत् आ चार्येणाप्यनुज्ञातःस्वगृहेप्रविशेत्ततः ब्राह्मणान्भोज यित्वातुस्वयंभुंजीतबंधुभिः इतिविसर्पपिटिकस्फो- टादिहरनागदानविधिः अथगुरुतल्पगोवावकीर्णि भवति दुश्चर्माअसौव्याधिनारतस्येनगुरुतल्पादिउ द्देशप्रायश्चित्तंकुर्यात् अथनामास्थानविस्फोटरोगे

षु अनिर्द्दिशायाःगोपयः पीत्वास्फोटवान्भवति स
कृच्छ्रशांतपनंकुर्यात्हिरण्यंवागावःदद्यात् इतिहस्त-
पादतलस्फोटेषु काकखरादिमांसभक्षनःपार्श्वयोःस्फो
टवान्भवति तदाकृच्छ्रानिकृच्छ्रचांद्रायणानिकुर्यात् अ
थक्रमप्राप्तस्यविसर्परोगस्यसनिदानंचिकित्सितमाह
रुग्विनिश्चयात् लवणादिकटूष्णादिसेवनाद्दोषकोप
नात् विसर्पःसप्तधाज्ञेयःसर्वतःपरिसर्पणात् पृथक्-
त्रयस्त्रिभिश्चैकोविसर्प्पाः द्वंद्वजास्त्रयः वातिकोपैत्ति
कश्चैवकफजःसंनिपातिकः चत्वारएववीसर्प्पाःवक्ष्यं
तेद्वंद्वजास्त्रयः आग्नेयोवातपित्ताभ्यांग्रंथ्याख्यः
कफपित्तजः यस्तुकर्द्दमकोघोरःसपित्तकफसंभवः रक्तं
लसीकात्वग्मांसरक्तदोषास्त्रयोमताः विसर्पाणांसमुत्प
त्तौविज्ञेयाःसप्तधातवः सिध्यंतिवातकफपित्तकृताविं
सर्पाः सर्वात्मकक्षतकृतश्चनसिद्धिमेति पित्तात्मकोंजन
वपुश्चभवेदसाध्यः कृच्छ्रश्चमर्मसुभवंतिहिसर्वएवविरे
कवमनालेपाःसेचनासृग्विमोक्षणं उपाचरेद्यथादोषं
विसर्पाभूयिदाहिभिः कुलंशताह्वास्फरदारुमुस्तावा
राहिकुस्तुंबरुकृष्णगंधा वातेर्क्कवंशार्त्तगलाश्चयोज्याः
केशेषुलेपेषुतथाघृतेषु प्रसेकाःपरिषेकाश्चशस्यतेपं
चवल्कलैः पद्मकोशीरमधुकैःचंदनैर्वाप्रशस्यते पित्त
जेपद्मिनीपंकपिच्छंवाशंखशैवलं गुंद्रामूत्रंतुशक्ति

वीगैरिकंवाघृतान्वितं न्यग्रोधपादागुंद्राचकदलीगर्भ एवच विषग्रंथिश्चलेपःस्यात्शतधौतघृतप्लुतः शिरीषं यष्टीनतचंदनैलामांसीहरिद्राद्वयकुष्टवालैः लेपोदशांगःसघृतप्रयोज्योविसर्पदुष्टव्रणशोफहारी दशांगःशिरीषोदुंबरौजंबूसेकालेपनयोर्हिताः श्लेष्मांतकत्वचोवापि प्रलेपाश्चोतनेहिताः वृषखदिरपटोलपत्रनिंबत्वगमृतामलकीकषायकल्कैः घृतमभिनवमेनदाशुपक्वंजयति विसर्प्पगदान्सकुष्टगुल्मान् पटोलसप्तछद निंबवासाफलत्रिकछिन्नरुहाविपक्कं तत्पंचतिक्तंघृतमाशुहंतित्रिदोषविस्फोटविसर्पकंडून् इतिवीरसिंहावलोकेविसर्प्पचिकित्सा कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च तथात्रिदोषेणविपर्ययेणकुर्व्वंति दोषाःपवनादयस्तु त्वचमाश्रित्य ते रक्तंमांसास्थिनि प्रदूष्यच घोरान्कुर्वंतिविस्फोटान्सर्वान्ज्वरपुरःसरान् अग्निदग्धानिभाःस्फोटाःसज्वरारक्तपित्ततः क्वचित्सर्वत्रवादेहेविस्फोटकइतिस्मृतः किराततिक्तकारिष्टसयष्ट्यांबुदवासकं पटोलपर्पटोशीरात्रिफलाकौटजान्वितैः द्वादशांगंतथैवैनत्सर्वविस्फोटनाशनं पटोलामृतभूनिंब वासकारिष्टपर्पटैः खदिराब्दयुतैःक्वाथोविस्फोटज्वरशांतये शिरीषोशीरनागाद्वहिंस्राभिर्लेपनाद्द्रुतं विसर्प्पविषविस्फोटाःप्रशाम्यंतिन

संशयः चंदनंनागपुष्पंचतंडुलीयकसारिवा शिरीषवल्क
लंजातीलेपस्तुदाहनाशनः इतिवीरसिंहावलोकेविस्फो
टाधिकारः शाखासुकुपितादोषाशोफंकृत्वाविसर्प्पवत्
भित्वैवंविद्यतेतत्रश्लेष्मामांसंविशोष्यच कुर्यात्तंतुनिभंसू
त्रंश्वपथुंजनयत्यपि विणद्वारेविमध्यैतत्स्नायुरूपांकुरा
कृतिः शनैःशनैःक्षताद्यातिनछेदाच्छोथमावहेत् तसाका
त्‌शोफशांतिःस्यात्पुनःस्थानांतरेभवेत् सस्नायुकइति-
ख्यातःक्रियोक्तात्रविसर्पवत् कुष्टरामठशुंठीभिःकल्कं
शिग्रुसमन्वितं पातालेपनयोगेनतत्तुपीडाविनाशनं
गव्यंसर्पिस्त्र्यहंपीत्वानिर्गुंडीस्वरसंत्र्यहं पिवन्स्नायुक
मत्युग्रंनिहंत्येवनसंशयः शिग्रुमूलदलैःपिष्टैःकांजिकेनस
सैंधवैः लेपःस्नायुकरोगाणांलेपनंपरमुत्तमं इतिस्नायु
कचिकित्सा मसूराकृतिसंस्थानाःपिटकाःस्युर्मसूरिकाः
आसांपूर्वज्वरःकंडूगात्रभंगोरतिर्भ्रमः सर्वासांवमनंपूर्वं
पटोलारिष्टवासकैः कषायैश्चवचावत्सयष्ट्याह्वफल
कल्कितैः रूक्षचीपत्रनिर्यासंहरिद्राचूर्णसंयुतं रोमांति
ज्वरविस्फोटमसूरीशांतयेपिवेत् पटोलींकुंडलींमुस्तवृष
धान्ययवासकैः भूनिंबनिंबकटुकापर्पटैश्चजलंसृतं म
सूरीसमयेदामाःपक्वाश्चैवविशोधयेत् नातःपरतरंकिंचि
त्विस्फोटज्वरशांतये इतिपटोलादि निंबःपर्प्पटकंपा
ठापटोलंकटुरोहिणीं वासांदुरालभांधात्रींउशीरंचंदनद्व

यं एषनिंबादिकक्काथःपीतःशर्करयान्वितः मसूरींत्रिदोष
जांहंतिज्वरविसर्पसंभवां उत्थितेप्रविशेद्यातुपुनस्तांवात्य
तोन्यसेत् इतिनिंबादिक्काथः खदिरत्रिफलारिष्टपटोला
मृतवत्सकैः क्काथोष्टभागोजयतिरोमांतिकमसूरिकां इ
तिखदिराष्टकः सौवीरेणतुसंपिष्टंमातुलिंगस्यकेसरं प्र
लेपात्साचयेदाशुदाहंचापिनियच्छति पाददाहंप्रकुरुतेपि
टकादाहसंभवाः तत्रसेकंप्रसूशंतिवहुशस्तंदुलांवुना
लिप्त्वाद्यादशचूर्णंवापाचनार्थंगुडेनतु तेनचाशुविपच्यं
तेवातपित्तकफात्मिका पंचवल्कलचूर्णेन क्ले दिनीमव
चूर्णयेत् तस्मान्नाकेचिदिच्छंतिकेचिद्गोमयरेणुना क्रमि
पातभयाच्चापिधूपयेत्सरलादिभिः शौचेवारिप्रयुंजीत
गायत्रीसारसंभवं चैत्रासितभूतदिनेरक्तपताकान्वि
तस्नुहीभवने धवलितकलशंन्यस्तंपादरजं दूरतोहंति शि
रीषोदुंबराश्वत्थशेलुन्यग्रोधवल्कलैः प्रलेपःसघृतःशी
घ्रंज्वरवीसर्पदाहजित् मसूरिकायांयुंजीतगोराज्यंपद्मकंतथाज्ञेयं
सारीषकंवापिभिषक्सर्वेषुकर्मसु इतिवीरसिंहावलोके
मसूरिकाध्यायः अथज्योतिःशास्त्राभिप्रायेणवल्मीक
पादज्वालागर्दभपाषाणचर्मकीलगुदविकारादीनांक्षुद्र
रोगानांहेतुमाह तत्प्रतीकारंच व्याधिभिरविभिर्भस्त्त
परकलहात्विकर्तितः शरीरःमंदग्रहेतिमिरारिपौभौमे-
णान्निरीक्षितेविकलः शत्रुग्रहेकंदशायांनयनविनाशो-

भवेच्चकुअतं ज्वरगर्द्दभरोगाः भवंतिक्रमयः पराभूतिः अथमकरकुंभांशस्थितमंगलावलोकितभानुजानितव ल्मीकपादादिक्षुद्ररोगोपशांतयेरविप्रीनयेपूर्ववत्जपहो मादिकंकुर्यात् रिपुग्रहवर्त्तमानसूर्यदशाजनितज्वाला- गर्द्दभादिरोगाणांशांतयेसूर्यप्रीतयेविधिवद्विधानंपूर्वोक्त- मेवकुर्यात् अथवल्मीकपादरोगस्यकर्मविपाकेहेतुमाह तत्प्रतीकारंच देवाग्रदत्तवस्त्राणांमूल्यानिस्वयमुपभो क्तुंयइच्छेत्तंहस्तिपादग्रहोगृण्हाति तेनगृहीतमात्रेणवृह द्वल्मीकपादोभवति तिमिरंचक्षुषासर्वांगंशुष्कोजायते एतत्कात्यायनेनाभिहितं अस्यप्रायश्चित्तं निराहारी त्रिरात्रमुपवासीहोमंव्याहृतिभिः पापनाशार्थेपवमानसू क्तंजपेत् ऋग्विधानेभिहितं हिरण्यदानंचकुर्यात् ब्रह्मां डपुराणे अस्यबलिरन्नदधिक्षीरमूलकतिलपिष्टलाजा गंधपुष्पधूपदीपवस्त्रैःसार्धंगृहीत्वाचतुष्पथेबलिंक्षिपेत् अनेनमंत्रेण प्रगृण्हीष्वबलिंचेमंहस्तिपादमहाग्रह आ तुरस्यसुखंसिद्धिंप्रयच्छत्वंमहाबल इतिवल्मीकपाद- हरणाधिकारः तथाच अथज्वालागर्द्दभरोगप्रतीका रायगायत्र्ययुतंजपेत् तिलाज्येनचजुहुयात् गांसुवर्णंच दद्यात् ब्राह्मणभोजनंचकारयेत् अथकीलकव्रणे परव्रतभेदीकीलकव्रणीभवति अस्यप्रायश्चित्तंकृच्छ्रं कृच्छ्रायसंदद्यात् अथवैकल्यरोगेमूत्रपुरीषंकृत्वाशौचस

कृत्वैवयोभवतिसस्तवद्गुदोभवति तत्रदारुणापिपीडा भवति कृच्छ्रातिकृच्छ्रचांद्रायणानिकुर्यात् अक्षिभ्या मित्यष्टोत्तरसहस्रंक्षीरसर्पिर्भ्यांजुहुयात् उघन्नद्यै तिजपेत् तथाविशेषतश्च ब्रह्मपुराणे पानीयंपायसं मुद्गाःशर्कराघृतसंयुताः इदमावश्यकंदेयंसर्वरोगोप शांतये इतिसर्वांगितोददाहरोगपानीयादिदानविधिः अथविज्ञातरोगेविषोध्वनशस्त्राद्यैरात्मानंयःप्रमापये त् जन्मजन्मांतरेऽविज्ञातरोगवान्भवति वैद्योरोगसं ज्ञांकर्तुमपिनशक्नोति सतुजपहोमादिसेतुबंधरामे श्वरदर्शनंकुर्यात् तथाचोक्तंविष्णुना जपेत्स्तोत्रादि मंत्रांश्चसेतुरामेश्वरेक्षणात् श्रीपर्वतेक्षणाद्वापिगोत्त मीस्नानतःपिवेत् मुक्तोभवतिपंचाशद्ब्राम्हणभोजन मितिवैद्यअविज्ञातक्षुद्ररोगशांतिः अथक्रमप्राप्त नांक्षुद्ररोगाणांसनिदानंचिकित्सितमाह रुग्विनिश्च यात् क्षुद्ररोगाःसमासेनचतुर्विंशत्प्रकीर्त्तिताः ग्रंथभू यस्त्वभीत्यात्रवक्ष्यामःकियतोत्रतान् स्निग्धाःसवर्णाः ग्रथिताःनिरुजोमुद्गसंनिभाः कफवातोत्थिताज्ञेयावा लानामजगल्लिका अंध्रालजीकच्छपिकाः तद्दस्थास्च रूपवान् ग्रीवांशकक्षाकरपाददेशेसंधौगलेवात्रिभि रेवदोषैः ग्रंथिःसवल्मीकवदक्रियाणांजातःक्रमेणैव गतःसवृद्धिं मुखैरनेकैस्तुतितोयवद्भिर्विसर्पवत्सर्पति

चोन्नताग्रैः वल्मीकमाहुर्भिषजोविकारंनिःप्रत्यनी कंचिरजंविशेषात् वातश्लेष्मसमुद्भूतःश्वपथुर्हनुसं धिजः स्थिरोमंदरुजास्निग्धोज्ञेयःपाषाणगर्द्दभः क र्णस्थानांतरेजातांपिटिकामुग्रवेदनां स्थितांपनसिकां तांतुविद्याद्वातकफोत्थितां विसर्पवत्सर्पतियःशोफ स्तनूरुपाकवान् दाहज्वरकरःपित्तात्सज्ञेयोज्वालग र्द्दभः वृंदसंग्रहात् तत्राजगल्लिकामामांजलौका- भिरुपाचरेत् शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपये न्मुहुः श्लेष्मविद्रधिकल्पेनजयेच्चानुशयींभिषक् वि वृतामिंद्रलुप्तांचगर्द्दभींज्वालागर्द्दभं इतिकांगंधमा जपेत्पित्तविसर्पात् मधुरौषधसिद्धेनसर्पिषापूरये- द्व्रणं रक्तावसेकैर्बहुभिःस्वेदनैरपतर्पणैः जयेद्विदा रिकांलेपैःशिग्रुदेवद्रुमोद्भवैः पनसिकांकछपिकामनेन विधिनाजयेत् साधयेत्कठिनानन्यान्सोफान्दोषसमु द्भवान् अंध्रालजीकछपिकांतथापाषाणगर्दभां स्कर दारुसुराकष्टैःस्वेदयित्वाप्रलेपयेत् कफमारुतशोफा ग्नोलेपःपाषाणगर्द्दभे शस्त्रेणोत्कृत्यवल्मीकंक्षारा- ग्निभ्यांप्रसाधयेत् मनःशिलालभल्लातसूक्ष्मैलागु- रुचंदनैः जातीपल्लवचक्रैश्चनिंबतैलंविपाचयेत् व ल्मीकंनाशयेत्तद्धिबहुछिद्रंबहुद्रवं शिरांचपाददारी षुवेधयेत्तलशोधनीं स्नेहस्वेदोपपन्नोतुपादावालेपये

मुहुः मधूच्छिष्टवसामज्जाघृतक्षीरविमिश्रितैः स-
र्ज्जोद्भसिंधूद्भवयोश्चूर्णमधुघृतप्लुतं निर्मथ्यकटुतैलं
हिहितंपादभ्रमार्जनं करंजबीजंरजनीकासीसंमधु
कंमधु रोचनाहरितालंचलेपोयमलसेहितः दहेत्
कदरमुद्धृत्यतैलेनदहनेनवा क्षिप्रमुष्णांबुनासि
न्नमुत्कृत्याभ्यज्यतंव्रणं दत्वासर्जरसंचूर्णंबुधोव्र
णवदाचरेत् स्वरसेनहरिद्रायाःपात्रेकृष्णायसेभयां
घृष्वातज्जेनकल्केनलिंपेच्चिप्पंपुनःपुनः निंबोदकेन
वमनंपद्मिनीकंटकेहितं निंबोदककृतंसर्पिःक्षौद्रंप
चनमिष्यते अहिपूतनके धात्र्याःपूर्वंस्तन्यंविशोध
येत् त्रिफलाखदिरक्वाथैर्व्रणानांपावनंसदा रसांज
नंविशेषेणपानलेपनयोर्हितं गुदभ्रंशेगुदंस्नेहैरभ्य
ज्यांशुप्रवेशयेत् प्रविष्टेस्वेदयेच्चापिबद्धंगोफणया
भृशं कोमलंपद्मिनीपत्रंयःखादेत्शर्करान्वितं एवं
निश्चित्यनिर्दिष्टानतस्यगुदनिर्गमः मूषकानांवसाभि
र्वागुदभ्रंशेविलेपयेत् स्विन्नमूषकमांसेनमुहुर्वास्वेद
येद्गुदं चर्मकीलांजतुमणिंमाषकांस्तिलकालकान्
उत्कृत्यशस्त्रेणदहेत्क्षाराग्निभ्यामशेषतः यौव
नेपिटकान्यच्छनीलिकाव्यंगशर्कराः शिरावेधैःप्रले
पैश्चजयेदभ्यंजनैस्तथा रोध्रधान्यवचालेपस्तारुण्य
पिटिकापहः व्यंगेषुचार्जुनत्वग्वामंजिष्ठावासमाक्षि

का लेपः सनवनीतावाश्वेताश्वखुरजामषी रक्तचंदन
मंजिष्ठाकुष्टरोध्रप्रियंगवः वटांकुरामसूराश्च व्यंगघ्नाव
र्णकांतिदाः केवलान्सर्पिषापिष्ठातीक्ष्णान् शाल्मलि
कंटकान् आलिप्तंत्र्यहमेतेन भवेत्पद्मोपमंमुखं मा
तुलिंगजटासर्पिःशिलागोशकृतोरसः मुखकांतिकरोले
पःपिटकातिलकालजित् अरूंषिकायांतुविरेचसिद्धे
सिरव्यधेनाथजलौकसांवा निंबांबुसिक्तेःशिरसःप्रलेपो
देयःसुवर्णोरससैंधवाभ्यां पुराणमथपिण्याकंपुरीषंकु
क्कुटस्यच मूत्रपिष्टप्रलेपोयंशीघ्रंहन्यादरूंषिकां हरिद्रा
द्वयमंजिष्ठात्रिफलारिष्टचंदनैः एतत्तैलमरूंषीणांसिद्ध
मभ्यंजनेहितं इतिहारिद्राद्यंतैलं गुंजाफलैःसृतंतैलं
भृंगराजरसेनवा कंडूदारुणहृत्कुष्टकपालव्याधिनाश
नं भृंगराजस्त्रिफलोत्पलसारिलोहपुरीषसमन्वितका
रितंतैलमिदं पवनदारुणहारिकुंचितकेशघनस्थिर-
कारि इतिभृंगराजतैलं इंद्रलुप्तेशिरांविध्वाशिला-
कासीसतुत्थकैः लेपयेत्परितःकल्कैःतैलमभ्यंजने
हितं कुटंनटाशेरवीजाहीकरंजकरवीरकैः अवगाढ-
पदंवापिप्रच्छयित्वातुपुनःपुनः गुंजाफलैर्भिरंलिंपेत्
केशभूमिंसमंततः इंद्रलुप्तापहोलेपोमधुनावृहतीरसः
हस्तिदंतमषिंकृत्वामुख्यंचैवरसांजनं रोमाण्यनेनजा
यंतेलेपात्पाणितलेष्वपि त्रिफलानीलिनीपत्रंलोहंभृंग

रसःसमं अविमूत्रेणसंयुक्तंकृष्णीकरणमुत्तमं लोह-
मलामलककल्कैःसजपाकुसुमैर्नरःसदास्नायी पलिता
निनपश्यतिगंगास्नायीवनरकाणि कासीसरोचनातु
त्थहरितालरसांजनैः अम्लपिष्टैःप्रलेपोयंतृषणकल्ल
हिपूतने मधुकस्यकषायेणतैलस्यकुडवंतथा कल्कैः
प्रियंगुमंजिष्ठाचंदनोत्पलकेसरैः कनकंनामतत्तैलंमु
खकांतिकरंपरं अभितोनीलिकाव्यंगंशोधनंपरमर्चि
तं इतिकनकतैलं मंजिष्ठामधुकंलाक्षामातुलुंगं
सयष्टिकां कर्षप्रमाणैरेतैस्तुतैलस्यकुडवंतथा आ
जंपयस्तुद्विगुणंशनैर्मृद्वग्निनापचेत् नीलिकापिटिका
व्यंगानभ्यंगादेवनश्यति मुखंप्रसन्नोपचितंनीलकर्क
शवर्जितं सप्तरात्रोपयोगेनभवेत्कनकसन्निभं इ
तिवीरसिंहावलोकेक्षुद्ररोगाधिकारःसमाप्तः अथ
मुखरोगे ओष्ठप्रकोपकृमिदंतमुखपाकदंतपुप्पुटदंत
हर्षगलितदंतमुखपूतिमांसांकुरद्विजिव्हादीनांरोगा
णांजातकाभिप्रायेणहेतुमाह तत्प्रतीकारंच श्रु-
ऋदशायांसूर्येविचरतिमुखरोगोजायते तत्प्रतीका
रंच सूर्यप्रीतयेप्रागुक्तंजपहोमादिकंकुर्यात् तेनोप
शाम्यति स्वयंप्रवृत्तधर्मोनिष्ठानस्थछेदीअविद्यमान
दोषादिवादिवाअसद्दोषसंकीर्त्तनशीलोचनासासंकोचना
दिपरदोषदर्शकोवासूचकोवादुर्गंधवदनोजायते असौ

चांद्रायणंकुर्यात् स्रक्चंदनधूपादिस्रगंधादीनिदद्यात् पंचाशद्ब्राम्हणभोजनंदद्यात् इतिपूतिवक्त्रेपरवाक् विघातार्थीमुखरोगीभवति सकृच्छ्रत्रयंकुर्यात् व्याहृतिभिराज्येनजुहुयात् परमर्मछेदीमुखरोगीभवति अ सौव्रीहिहिरण्यंदद्यात् तथाच सततंपरजिव्हाछेदीअनृतभाषी अव्यवहारपक्षपातीचजिव्हारोगीआस्यव्रणीभवति अस्यप्रायश्चित्तंपाराकद्वयं कूष्मांडीहोमंकयानश्चित्रंसूक्तंजपेत् होमंकुर्यात् आस्यव्रणीहिहिरण्यंदद्यात् अनुक्तसंख्यायत्रस्यात्तत्रशक्तिंसमीक्ष्यच विद्यादेश्वजपादेश्वइत्याहभगवान्शिव इतिवचनात् अपरंच कूटसाक्षीमुखरोगीशोणितपित्तीवाभवति सकृच्छ्रातिकृच्छ्रचांद्रायणानिकुर्यात् कूष्मांडीभिर्जुहुयात् सावित्रीचजपेत् व्रीहिहिरण्यंदद्यात् अपरंचबौद्धायनः वाग्विरोधंगुरौ कृत्वामुखरोगीभवेन्नरः अस्यदानेनविहितः प्रतीकारोयमुच्यते सौवर्णराजतंताम्रंपलेनार्द्धपलेनच कारयेत्किरिणंसौम्यंयथाविभवतोपिवा तस्यशुभौचकर्त्तव्यौ दंतौरजतकेनवा लांगूलंमौक्तिकैः कुर्यात्रत्नानामक्षिणीतथा संवेष्ट्यपीतवस्त्रेणगंधपुष्पाक्षतादिभिः अर्चयेत्धान्यराशिस्थंधान्यद्रोणाष्टकंमतं श्रुतवृत्तोपसंपन्नंब्राह्मणंसंजितेंद्रियं दांतंकुलीनं

धर्मिष्ठंअनुदूग्रकरंनृणां आहूयपरयाभक्त्यावस्त्रालंकारभूषणैः तेनैतत्कारयेत्कर्मपरितोष्ययथाविधि समिदाज्यतिलैस्तेनहोमंचापिप्रवर्त्तते अग्निनाग्निरसेनैवततोहस्त्यर्चनंभवेत् स्वाहांतंकर्मकृत्वाथप्रणीतामोक्षणंतथा ततःशुक्लांबरधरः शुक्लमाल्यानुलेपनः तस्मैहुतवतेदद्यात्करिणंतंसदक्षिणं मंत्रेणानेनविधिवत्प्राङ्मुखायविशेषतः सुप्रतीकगजेंद्रत्वंसरस्वत्याभिषेचनं इंद्रस्यवाहनोसित्वंसर्वदेवैश्वपूजितः दानेनानेनदत्तेनमुखरोगंविनाशय दानमंत्रः ब्राह्मणान्भोजयेत्तंवसहभुंजीनबंधुभिः इतिमुखरोगघ्नगजदानविधिः अथक्रमप्राप्तस्यमुखरोगस्यसनिदानंचिकित्सितमाह रुग्विनिश्चयात् कर्कशौपरुषौस्तब्धौसंप्राप्तानिलवेदनौ दल्येतेपरिपाट्येतेओष्ठौमारुतकोपतः चीयत्तेपिटिकाभिस्तुसरुजाभिःसमंततः सदाहपाकपिटकोपीताभासौचपित्ततः सवर्णाभिस्तुचीयंतेपिटकाभिरवेदनौ भवतस्तुकफादोष्ठौपिच्छलौशीतलौगुरू संनिपातेनविज्ञेयावनेनपिटकाचिताः रक्तोपसृष्टौरुधिरंश्रवतःशोणितप्रभौ मांसंदुष्टौगुरुस्थूलौमांसपिंडवदुत्थितौ जंतवश्चात्रमूर्छंतिनरस्योभयतोमुखाः शोणितंदंतवेष्टेभ्योयस्माकस्मात्प्रवर्त्तते दुर्गंधीनिसकृष्णानिप्रक्लेदीनिसमंततः दंतमांसानिशीर्यंतेपचंतिचपरस्परं शीतादोनामसव्याधिः

कफशोणितसंभवः मारुतेनाधिकोदंतोजायतेतीव्रवेद
नः वर्द्धनःसमतोव्याधिःजातेचरुक्प्रशाम्यति जिह्वाग्र
रूपःश्वयथुर्हिजिह्वामुन्नम्यजातः कफमूलरक्तः लाला
करःपांडुयुतःसशोफःसोवानुजिह्वाकथिताभिषग्भिः
मुखवैरस्यदौर्गंध्यपाकक्लेदादयोगदाः विशीर्णदंतमांसा
श्चभवंस्यन्येपिसोल्वणाः वृंदसंग्रहात् ओष्ठप्रकोपेवा
तोत्थेसोल्वणेनोपनाहयेत् समस्तेचैवनश्येनतैलंवातह
रैःस्मृतं श्रीवेष्टकंसर्जरसंगुग्गुलुंसुरदारुच यष्टीम
धुकचूर्णैर्हिविदध्यात्प्रतिसारणं वेधंशिराणांवमनंवि
रेकंतिक्तस्यपानंमृदुभोजनंहि शीतान्प्रदेहान्परिसेच
नंचपित्तोपसृष्टेष्वधरेषुकुर्यात् शिरोविरेचनंधूमस्वेदः
कवलधारणं हतरक्तेप्रयोक्तव्यंओष्ठपाकेकफात्मके
त्रिकटुःसर्जिकाक्षारःक्षारश्चयवशूकजः क्षौद्रयुक्तंवि
धातव्यमेतच्चप्रतिसारणं हितंचत्रिफलाचूर्णंमधुयुक्तं
प्रलेपनं शीतोदहतरक्तेतुलेपोनागरसर्पिषा कुष्ठंदार्वी
लोध्रमब्दसमंगापाठातिक्तातेजजीदीपिकाचचूर्णंशस्तं
घर्षणंतद्विजानांरक्तस्रावंहंतिकंडूरुजंच चलदंतस्थि
रकरंकार्यंलकुचचर्वणं दंतपुप्पुटकेकार्यंतरुणेरक्तमोक्ष
णं सपंचलवणक्षारःसक्षौद्रंप्रतिसारणं माक्षिकंपिप्प
लीसर्पिर्मिश्रितंधारयेन्मुखे दंतशूलहरंप्रोक्तंप्रधानमि
दमौषधं विस्राविते दंतवेष्टेव्रणंतुपरिसारयेत् गेध्रंपतं

गमधुकूलाक्षाचूर्णैर्मधूत्तरैः साधिनोत्तरक्तेचरोध्रमुस्ता
रसांजनैः सक्षौद्रैःसस्यतैलेपोगंडूषेक्षीरिणोहिताः
क्रियांपरिदरेकुर्यान्तुशीतादोक्तांविचक्षणः शस्त्रेणदंत
मूलानिशोधयेच्चविचक्षणः ततःक्षीरंप्रयुंजीतक्रियाः
सर्वास्सुशीतलाः नाडीव्रणहरंकर्मदंतनाडीषुकारयेत्
सुखोष्णाःस्नेहकवलाःसर्पिषात्वृत्तस्यच निर्यूहाश्चा
निलघ्नानांदंतहर्षप्रमर्द्दकाः भद्रादार्व्यादिवर्षाभूलेपैः
स्निग्धैश्चभोजनैः हिंगुसोष्णंचमतिमान्कृमिदंतेप्रता
पयेत् फलान्यम्लानिशीतांबुरूक्षान्नंदंतधावनं तथा
तिकठिनान्भक्षान्दंतरोगीविवर्जयेत् उपजिव्हांतु
संलिप्यक्षारान्नप्रतिसारयेत् शिरोविरेकंगंडूषधूमैश्चै
वमुपाचरेत् व्योषक्षाराभयावन्हिचूर्णमेतत्प्रघर्षणं
तालुमूलेकफासृग्भ्यांजायतेगलशुंडिका छित्वातां-
व्योषसिंधूत्थोयाक्षौद्रैःप्रतिसारयेत् गलशुंडीक्षयंयाति
वज्रीक्षीरेणलेपिता वचामतिविषांपाठांरास्नांकटुकरो
हिणीं निक्वाथ्यपिचुमंदंचकवलंतत्रधारयेत् तुंडिके
चध्रुवोत्कर्णेसंघातेतालुपुप्पुटे एषएवविधिःकार्योविशे
षःशस्त्रकर्मणि तालुपाकेतुकर्तव्यंविधानंपित्तसाध
नं स्नेहस्वेदोतालुशोषेविधिश्चानिलनाशनः साध्या
नांरोहिणीनांतुहितंशोणितमोक्षणं छर्द्दनंधूमपानंच
गंडूषोनस्यकर्मच विश्वाविकंठशालूकंसाधयेत्तुंडिके

शिवत् उपजिह्वकवच्चापिसाधयेत्तंजिह्वकं छेदये-
न्मंडलाग्रेणतीक्ष्णसंघर्षणादिभिः एकवृंदंतुविश्राव्य
विधिशोधनमाचरेत् गिलायुश्चापियोव्याधिस्तंचशस्त्रे
णसाधयेत् कंठरोगेष्वसृक्मोक्षस्तीक्ष्णैर्नस्यादिक
र्मच क्वाथपानंतुदार्वीत्वक्निंबतार्क्ष्यकलिंगजं हरी
तकीकषायोवापेयोमाक्षिकसंयुतः कटुकातिविषा
पाठादारुमुस्तकलिंगकाः गोमूत्रक्वाथितापेयाःकंठ
रोगविनाशनं गृहधूमोयवक्षारःपाठाव्योषरसांज
नं तेजाव्हात्रिफलारोध्रंचित्रकश्चेतिचूर्णितं सक्षौ
द्रंधारयेदेतत्गलरोगविनाशनं कालकंनामचूर्णंतुदंत
स्यगलरोगनुत् मनःशिलायवक्षारोहरितालंससैंध
वं दारुतिक्तेतुतच्चूर्णंमाक्षिकेणसमायुतं मूर्छितघृ
तमंडेनकंठरोगेषुधारयेत् मुखरोगेषुचश्रेष्टपीतकं
नामकीर्त्तितं पीतकचूर्णं यवाग्रजंतेजवतीसपा
ठंरसांजनंदारुनिशांसकृष्णां क्षौद्रेणकुर्यात्गुटि
कांमुखेन तांधारयेत्सर्वगलामयेषु मुखपाकेशिरा
वेधःशिरःकार्यंविरेचनं कार्यंचबहुधानिस्यंधात्रीचू
र्णस्यघर्षतं जातीपत्रामृताद्राक्षादेवदारुफलत्रिकैः
क्वाथोमधुयुतःशीतोगंडूषोमुखपाकनुत् पटोल
निंबजंबाम्रमालतीनवपल्लवं पंचपल्लवकःश्रेष्टः
कषायोमुखधावने खदिरस्यतुलांसम्यक्जलद्रोणे

विपाचयेत् शेषाष्टभागेतत्रैवप्रतिवापंप्रदापयेत् जाती
कर्पूरपूगानिकंकोलस्यफलानिच इत्येषागुटिकाकार्या
मुखसौभाग्यवर्द्धिनी दंतोष्टमुखरोगेषुजिह्वाताल्वामये
षुच इतिखदिरगुटिका बकुलस्यफलंरोध्रंवज्रवल्ली
कुरंटकं चतुरंगुलवंधूला वाजकर्णोरिमासनं ए
षकल्ककषायाभ्यांतैलंपक्कंमुखेधृतं स्थैर्यंकरोतिचल
तांदंतानांधावनेनवा इतिबकुलाद्यंतैलं खदिरस्य
तुलांसम्यक्जलद्रोणेविपाचयेत् शेषाष्टभागेतत्रैवप्रति
वापंचकारयेत् जातीकर्पूरपुंखानिकंकोलस्यफलानितु-
इत्येषागुटिकाकार्यामुखसौभाग्यवर्द्धिनी दंतोष्टमुख-
रोगेषुजिह्वाताल्वामयेषुच इतिस्वल्पखदिरगुटिका
इतिवीरसिंहावलोकेमुखरोगाधिकारः अथक्रमप्राप्त
स्यकर्णरोगस्यज्योतिःशास्त्राभिप्रायेणहेतुमाह तत्प्र
तीकारंच यथोक्तंजातके धनव्यय गतःशुक्रोभौमो
वाकर्णदोषकृत् अन्यच्च व्ययगेशुक्रेकर्णपीडा अ
परंच दाक्षरायरूपगुणभोगधनैःप्रधानश्चंद्रेकुलीर
वृषभाजिगतेविलग्ने उन्मत्तनीचबाधिरोविकलश्चमूकः
शेषेषुनाभवतिकृष्णतनौविशेषात् अथद्वितीयद्वा
दशस्थशुक्रजनितकर्णदोषोपशांतयेपूर्ववज्जपहो
मादिशुक्रप्रीतयेपूर्ववत्कुर्यात् कर्कवृषमेषवर्ज्जंअन्य
लग्नेषुवर्त्तमानेक्षीणचंद्रेबाधिर्यंतदुपशांतयेचंद्रप्रीतये

तदुक्तंपूर्ववत्कुर्यात् अथकर्णरोगस्यकर्मविपाकेहे
तुमाह तत्प्रतीकारंच योमातापितृभ्यांप्रवृत्तमैथुनंशृ
णोतिसकर्णशूलीभवति पश्चाद्बधिरःकिंचिदेवशृणोति
कपालेष्वसत्यध्वनिर्भवति इतितद्विष्णोरित्यष्टोत्तरा-
युतंजपेत् पुरुषसूक्तंवा अपामार्जनस्तोत्राभिमंत्रितं
जलंपिबेत् यथाविभवंब्राह्मणेभ्योभोजनंदद्यात् महा
ध्वनिर्भीनिष्कविंशतिकंदद्यात् विष्णुप्रकाशकोविद्वान्
कर्णरोगप्रशांतये भोजनंब्राह्मणेभ्यश्चप्रदद्यात्प्रयतो
नरः तथाच मैथुनंशृणुयात्पित्रोःकर्णशूलीभवेत्तुसः
इतिवाक्यात् अपरंच मातापित्रोर्देवब्राह्मणानांगुरू
णामन्येषामन्येनक्रियमाणांयोनिंदांशृणोतिसकर्णशू
लीप्रस्रवत्पूयशोणितोभवति तदुपशांतयेहिरण्यंर-
क्तवासांसिब्राह्मणानांचभोजनंदद्यात् दद्यान्नीलवृषा
नूपंचकृमिकर्णोनृपोत्तमेतिवचनात् इतिकर्णरोगप्रती
कारः अथक्रमप्राप्तस्यकर्णरोगस्यनिदानंचिकित्सित
माह यथाहसुश्रुताचार्यः कर्णशूलंप्रणादश्चबाधिर्यंक्ष्वे
डएवच कर्णस्रावःकर्णकंडूःकर्णवर्चस्तथैवच कृमि
कर्णप्रतीनाहोविद्रधिर्विविधास्तथा कर्णपाकःपूतिकर्णः
तथैवार्शश्चतुर्विधं तथार्बुदंसप्तविधंशोफश्चापिचतुर्वि
धः एतेकर्णगतारोगाअष्टाविंशतिरीरिताः रुग्विनि
श्चयात् समीरणश्रोत्रगतोन्यथास्वरान्समंततःशूल

मतीवकर्णयोः करोतिदोषैश्चयथासमावृतः सकर्णशूलो
कथितोभिषक्वरैः कर्णश्रोत्रस्थितेवातेशृणोतिविविध-
धान्स्वरान् भेरीमृदंगशंखानांकर्णनादःसउच्यते यदा
शब्दवहोवायुःश्रोत्रमावृत्यतिष्ठति शुष्कश्लेष्मान्वितोवा
पिवाधिर्यतेनजायते वायुःपित्तादिभिर्युक्तोवेणु घोषो
पमंस्वनं करोतिकर्णयोःक्ष्वेडंकर्णक्ष्वेडःसउच्यते यदा
तुमूर्छत्यणवोपिजंतवःसृजंत्यपत्यान्यथवापिमक्षिकाः
तदंजनत्वाच्छ्रवणोनिरुध्यतेभिषग्वराद्यैःकृमिकर्णकोग
दः इत्याद्याबहवोरोगाःसंत्यन्येसूक्ष्मवेदिनः कपित्थमा
तुलिंगाम्लशृंगवेररसैःशुभैः सुखोष्णैःपूरयेत्कर्णंकर्ण
शूलोपशांतये शृंगवेरंचमधुचसैंधवंतैलमेवच कदुष्णं
कर्णयोर्देयमेतद्वावेदनापहं लशुनार्द्रकशत्रूणांमुरंग्या-
मूलकस्यच कदल्याश्चरसःश्रेष्ठःकदुष्णःकर्णपूरणे समु
द्रफेनचूर्णेनयुक्त्यावाप्यवचूर्णयेत् आर्द्रकःसूर्यवार्त्ताकः
सौभांजनकमूलकाः स्वरसामधुतैलसैंधवयुताःपृथ-
गुष्णाःकर्णशूलहराः सौभांजनस्यनिर्यासस्तिलतैलेन
संस्रुतः व्यक्तोष्णःपूरणःकर्णेकर्णशूलोपशांतये चूर्णंपंच
कषायाणांकपित्थरससंयुतं कर्णस्रावेप्रशंसंतिपूरणंमधु
नासह सर्जत्वक्चूर्णसंयुक्तःकार्पासीफलजोरसः मधुना
संस्रुतःसाधुकर्णस्रावेप्रशस्यते शंबूकस्यतुमांसेन्नकटु
तैलंविपाचयेत् तस्यपूरणमात्रेणकर्णनाडीप्रशाम्यति

अथकर्णप्रतीनाहेस्नेहस्वेदौप्रयोजयेत् ततोविरक्तःशिर
सःक्रियांप्राप्तांसमाचरेत् क्लेदयित्वातुतैलेनस्वेदेनप्रवि
लाप्यच शोधयेत्कर्णपूरंतुभिषक्शुद्धशलाकया निर्गु
डीस्वरसंतैलंसिंधुधूमरजोगुडः पूरयेत्पूतिकर्णस्यशमनो
मधुसंयुतः सूर्यावर्तकस्वरसंसिंदुवाररसंतथा लांगली-
मूलकरसमुषणेनावचूर्णितं पूरयेत्कृमिकर्णंतुजंतूनांना
शनंपरं घृतंरसांजनंनार्याःक्षीरेणक्षौद्रसंयुतं प्रशस्यते
चिरोत्थेपिसस्रावेपूतिकर्णके कुष्ठंहिंगुवचादंतीशताह्वा
विश्वसैंधवैः पूतिकर्णापहंतैलंवस्तमूत्रेणसाधितं शताव
रीवाजिगंधापयस्यैरंडबीजकैः तैलंविपक्वंसक्षीरंपाल्यां
कर्णस्यपुष्टिकृत् इतिश्रीवीरसिंहावलोकेकर्णरोगा
धिकारः अथनासारोगस्यज्योतिःशास्त्राभिप्रायेणहे
तुमाह तत्प्रतीकारंच यथोक्तंजातके शनिभृगुरवि-
कृतयोगेनासारोगःप्रजायतेजंतोः नानाव्याधिकृशाः
रिपुजाभीतिर्भवेद्विषमा अथत्रिग्रहजनितनासारोगोप-
शांतयेक्रमेणपूर्ववद्विधानंकुर्यात् तेनोपशांतिः अथ
नासारोगस्यकर्मविपाकेहेतुमाह तत्प्रतीकारंच य
थोक्तंगौतमीये विद्यमानाविद्यमानपरदोषस्यप्रख्या
पनशीलः पिशुनःदुर्गंधनाशिकोभवति किंचनासासं
कोचनादिनापरदोषदर्शकोवासतत्पापोपशांतयेकृच्छ्रद्व
यंयत्प्रत्याम्नायेसुवर्णंवादद्यात् अपरंच तथानुष्ठान

कालेकुक्कुटखरादीन्कामाद्यईक्ष्यतेसनासिकाव्रणी भवति अर्यनयनस्यप्राशुक्तंविदध्यात् उद्धर्यतेन्नृचेन्न चरुधृताभ्यांजुहुयात् श्रीसूक्तंजपेत् रक्षांतस्यशिखा यांदूर्वाक्षतैर्बध्नीयात् इतिनासारोगः अथक्रमप्राप्तस्य नासारोगस्यसनिदानंचिकित्सितमाह सुश्रुतात् अपी नसः पूतिनस्यंनासापाकस्तथैवच तथाशोणितपित्तंच पूयःशोणितएवच क्षवथुभ्रंशथुर्दीप्तोनासानाहःपरिश्रवः नासाशोषेनसहिताःदशकाश्वेरितागदाः चत्वार्यर्शांसि चत्वारःशोफाःसप्तार्बुदानिच प्रतिश्यायाश्चयेपंचवक्ष्यं तेसचिकित्सिताः एकत्रिंशत्सहैतेस्तुनासारोगाःप्रकीर्ति ताः वृंदसंग्रहात् पंचमूलीभृतक्षीरस्याच्चित्रकहरीतकी सर्पिर्गुडःषडंगश्चयूषःपीनसशांतये व्योषचित्रकताली सतिंतिडीकाम्लवेतसैः अजाजीचव्यतुल्यांशैरेलात्वक् पत्रपादिकैः व्योषादिकमिदंचूर्णपुराणगुडमिश्रितं पीन सश्वासकासघ्नंरुचिस्वरकरंपरं ॥व्योषाद्यंचूर्णं॥ धात्री दंतीवचाशिग्रुसुरसव्योषसैंधवैः पाचितन्नावनंतैलं पूतिनासागदंहरेत् नासापाकेपित्तहृत्संविधानंकार्यं सर्वबाह्यमाभ्यंतरंच हरेद्रक्तंक्षीरवृक्षत्वचोवासाज्या सेकेयोजनीयाश्चलेपे शुंठीकृष्णाकणाबिल्वद्राक्षाक ल्ककषायवत् साधितंतैलमाज्यंवानस्यंक्षवथुरुक्प्र णुत् नासारोगेपैत्तिकेपैत्तिकंचाविधिंकुर्यान्मधुरंशीत

लंच नासादाहेस्नेहपानंप्रधानंस्निग्धाधूमाधूमवर्त्तिश्च
नित्यं वातिकेतुप्रतिश्यायेपिबेत्सर्पिर्यथाक्रमं पंचभिर्ल
वणैःसिद्धंप्रथमेनगणेनवा नस्यादिषुविधिःकृत्स्नामवे
क्ष्येतार्द्दितेरितं पित्तरक्तात्ययेपेयंसर्पिस्तुमधुरैःसृतं
परिषेकान्प्रदेहांश्चकुर्यादपिचशीतलान् कफजेसर्पि
षास्निग्धंतिलमाषविपक्कया यवाग्वावामयित्वावाश्ले
ष्मघ्नंक्रममाचरेत् पुटपक्कजटापत्रंसिंधुतैलसमान्वितं प्र
तिश्यायेषुसर्वेषुशीतलंपरमौषधं उषणंगुडसंयुक्तंस्नि
ग्धंदध्यम्लभोजनं प्रतिश्यायहरंचैवविशेषात्कफना
शनम् ततःपक्कंकफंज्ञात्वाहरेच्छीर्षविरेचनैः पिप्पली
शिग्रुबीजानिविडंगंमरिचानिच अवपीडःप्रशस्तोयंप्र
तिश्यायनिवारणः रक्तकरवीरपुष्पंजात्यसनिमल्लि-
कायाश्च एतैःसमंतुतैलंनासार्शसांनाशनंघृतं इति
करवीराद्यं सर्पिःपानंभोजनंजांगलेश्चस्नेहस्वेदौ
स्नैहिकाधाश्चयूषाः शेषान्रोगान्घ्राणजान्सन्नियच्छे
दुक्तंतेषांयद्यथासंविधानं इतिवीरसिंहावलोकेनासा
धिकारः अथज्योतिःशास्त्राभिप्रायेणनयनामय
स्यहेतुमाह तत्प्रतीकारंच यथोक्तंजातके विक-
लेक्षणोर्कलग्नेतैमिरिकोजेश्चभेतु रात्र्यंध बुद्बुद
दृष्टिः कर्किणिकाणोव्ययगेशशांकेवा तथाच नृप
बंधनसंतसोमार्गरेतोयुवतिविद्वेषी विकलनयनो-

च्छमस्थेसकरवधनहीनोल्पजीवितःपुरुषः अन्यच्च
नयनातुरःकुलीनःसुभगोवात्सल्यसंयुतोमनुजः चक्र
गुरुदिवसनाथैरेतस्थैस्याद्दिभवसंपन्नः अथार्केल
ग्नस्थेविकलनयनंमेषस्थेसूर्येतिमिरदोषःस्वराशौ
रान्ध्यंधः कर्कस्थेबुधेदुष्टदृष्टिः व्ययगेशशांकेचकाणः
अथक्रमेणैवजातकोक्तस्थानास्थितग्रहजनितनयना
मयोपशांतयेविधिवत्सूर्यप्रीतयेयथोक्तमेवविधानंकु
र्यात् व्ययगेशशांकेपिकाणत्वंतदुपशांतयेचंद्रप्रीतये
पूर्ववत्गुरुबुधसूर्ययोगेपिउक्तंकुर्यात् भौमगुरुयो
गेपिपूर्ववत् अथनयनामयस्यकर्मविपाकेहेतुमाह त
त्प्रतीकारंच परदृष्टिविघातकृत्भिषक्मिथ्याचारे
णव्याधिकृत् यद्वापरस्त्रियंदृष्ट्वादृष्टिर्यःप्रेरयतिसने-
त्ररोगीभवति अस्यप्रायश्चित्तं चांद्रायणंपराकंवाकु
र्यात् अप्राप्यशक्तःप्रतिदिनंपंचाशद्ब्राम्हणभोजनंका
रयेत् अप्राप्यशक्तोयःसुपर्णोस्कवर्णोभवतिसोति
चरुघृताभ्यामष्टोत्तरसहस्रंजुहुयात् यावद्रोगमोक्षः
चक्षुर्मेदेहीत्येनंमंत्रंजपेत् आज्यंसहिरण्यंसुद्गान्नंब्रा
म्हणेदद्यान्नेत्ररोगापनुत्तये अथनयनपूयेजलेदंपती
भ्यांप्रवृत्तंमैथुनंयोनिरीक्ष्यतेसनयनपूयवान्भवति
सजलनयनश्चसचक्षुर्मेदेहि अक्षिभ्यामितिमंत्राभ्यां
जपहोमंकुर्यात् सूर्यस्यसहस्रकलशाभिषेकंकारयेत्

सहस्रकलशस्नानरवौकुर्याद्द्विजोत्तमः इतिवचनात्
यथाविभवंब्राह्मणभोजनंकारयेत् इतितत्रपूजासज
ललोचने अथमंददृष्टौ यःउच्छिष्टःउद्यंतंभास्करंमध्या
न्हगतंअस्तंगतंभास्वंतंवानक्षत्राणिवा निरीक्ष्यते
समंदभूतनेत्रदृष्टिर्भवति सउद्यन्नद्यमंत्रमिहेत्यादिभिः
चयाचरुघृताभ्यामष्टोत्तरसहस्रंजुहुयात् घृतेनचरु
णाचैवनेत्रहीनोहुताशने जुहुयादयुतंसम्यगितिशा-
स्त्रविनिश्चयः इतिकूर्मपुराणे निष्कद्वादशकंदद्या
त्रक्तवासाचैवहि अपरंच यःपूर्वजन्मनिब्राह्मणदे
वमंदिरेवर्तमानंज्वलंतंदीपंनिर्वापयतिसोन्यजन्मनि
तिमिरव्याधिर्भवतिसमस्तभूमिदेवतान्मंत्रान्जपेत्
जलमभिमंत्र्यसर्वांगेषुप्रोक्षयेत् मुक्तोभवति महा
देवस्यसहस्रकलशाभिषेककुर्यात् दीपकंभंजयित्वा
तुतिमिरव्याधिमान्भवेत् इतिवचनात् इतितिमि
रहरः अथाक्षिवेदनापद्मपुराणे जन्मांतराक्षिभे
देनजायतेह्यक्षिवेदना वक्ष्यामितत्प्रतीकारंब्रह्मणा
भाषितंपुरा पलेनकारयेद्धेम्नागरुडविष्णुवाहनम्
राजतोचतथापक्षौरत्नजौस्फुवेष्टितौ कर्णद्वयंचक्षु-
र्युगलंमणिभ्यांतुप्रकल्पितम् ग्रैवेयकंस्वर्णमयंग्रीवा
यातस्यविन्यसेत् नासिकायांतुवैडूर्यंमौक्तिकंवाप्रक-
ल्पयेत् वस्त्रैर्नानाविधैर्नद्रमलंकृत्यशुभाकृतिं स्था

पर्येसुरतोविष्णोःप्रीत्यर्थंत्वगदाभृतः गंधपुष्पाक्षतैर्व
स्त्रैःपूजयेद्ब्राह्मणोत्तमं वेदवेदांगकुशलंसर्वविशारदं
होमश्चतत्रकर्त्तव्योमंत्रैःश्राद्धादिकंशुभैः ब्रह्मागरुडगा
यत्र्यासमिदाज्यतिलाहुतीः गरुडगायत्रीनयनवैकल्प
हरायथा पक्षिराजायविद्महेस्वर्णपक्षायधीमहितन्नो
गरुडःप्रचोदयात् इतिगरुडगायत्री पुण्याहवाचनं-
कार्यंब्राह्मणैर्वेदपारगैः तस्मैहुतवतेदद्यात्सौरिप्रीत्य
र्थमादृतः भक्त्यासंपूज्यविधिवत्प्राङ्मुखोनेत्ररोगवा
न् देवदेवजगन्नाथनारायणजगन्मय पुष्पंवापटलं
वापि आंध्यंरक्तमथापिवा स्त्रवज्जलंवापूयंवारक्ता
क्षंवातथार्बुदान् दानमंत्रः ततोविशिष्टविप्रेंद्राशि
ष्टैःशिष्टैश्चबंधुभिः ब्रह्मांडपुराणे आक्षिसंभवरोगा
णांआज्यंकनकसंयुतं नक्तांध्यंजायतेतस्ययोगवान्ने
त्रसुहृद्ये धूलिप्रक्षेपकुरुतेतस्यवक्ष्यामिनिःकृतिं वि
ष्णोररराटमसीतिविष्णुविष्णोर्नुकमितिमंत्रेणजपेत् श्री
मतोगोपवेषस्ययथाशक्त्याचभक्तितः स्वर्णेनप्रतिकृ
तिंवेणुवादनतत्परं बर्हापीडेनसंयुक्तंद्विभुजंहर्षसंयुतं
कारयित्वाशुभाकारंप्रक्षाल्यशुभवारिणा वस्त्रेणवे
ष्ट्यविधिवत्गंधमाल्यैःसमर्चयेत् तंदुलोपरिसंस्थाप्य
यथाविभवविस्तरं पूजांचकारयेन्मंत्रीसुभैःपूर्वोदितैः
क्रमात् होमंतत्रप्रकुर्वीतसमिदाज्यतिलैःसह देवस्य

दद्यान्नैवेद्यंहविःसर्वसमन्वितं अष्टोत्तरशतंवापिमूलमं
त्रेणवैश्रुतं जुहुयादथरोगार्तःप्राङ्मुखःप्रयतःशुचिः शु
क्लांबरधरःशुक्लःगंधमाल्यानुलेपनः सदक्षिणांपुनर्दद्यात्
प्राङ्मुखोवाप्युदङ्मुखः मंत्रेणानेनविधिवत्नमस्कृत्यतु
भक्तितः गोविंदगोपीजनवल्लभेशविध्वस्तकंसत्रिदशेंद्रवं
द्य गोवर्द्धनाद्रिप्रवरैकहस्तसंरक्षिताशेषगवप्रवीण गो
नेत्ररेणुक्षपणप्रभूतामाध्यंतथोग्रंतिमिरंक्षपाशुइतिदा
नमंत्रः एवंकृत्वाविधानंतुगोपवेषधरस्यतु तत्क्षणादेव
हिसुखंजायतेनात्रसंशयः इतिराज्यंधहरगोपालदान
विधिः अथक्रमप्राप्तस्यनेत्ररोगस्यसनिदानंचिकित्सित
माह रुग्विनिश्चयात् उष्णाभितप्तस्यजलप्रवेशाद्दूरे-
क्षणात्स्वप्नविपर्ययाच्च स्वेदाद्रजोधूमनिषेवणाद्धर्छि-
र्द्विघाताद्वमनातियोगात् द्रवान्नपानातिनिषेवणाच्च
विण्मूत्रवातक्रमनिग्रहाच्च बाष्पग्रहात्सूक्ष्मनिरीक्ष
णाच्चनेत्रेविकारान्जनयंतिदोषाः वातात्पित्तात्कफाद्र
क्तादभिष्यंदश्चतुर्विधः प्रायेणजायतेघोरःसर्वनेत्रा
मयंकरः षट्सप्ततिर्लोचनजाविकारास्तेषामभिष्यंद
समुद्भवानांश्लेष्माश्रयत्वादतिलंघनंप्राक्प्रशस्यतेसु
क्ष्मदलोदनंच नेत्रेएवमनुष्याणासर्वत्रेहस्करवावहे त
स्माद्यत्नेनसद्वैद्यैस्तयोःकार्यंचिकित्सितं वृंदसंग्रहात्
लंघनालेपनस्वेदशिरावधविरेचनैः उपाचरेदभिष्यंदान्

जनाश्च्योतनादिभिः अक्षिकुक्षिभवारोगाःप्रतिश्यायव्र
णज्वराः पंचैतेपंचरात्रेणरोगाःशाम्यंतिलंघनात् स्वेदप्रले
पसिक्थान्नसेकोदिनचतुष्टयं लंघनंचाक्षिरोगाणांआ
मानांपाचनानिषट् श्रीवासातिविषाब्लोध्रैश्चूर्णितैरल्प
सैंधवैः अव्यक्तेक्षिगदेकार्यप्तो तस्थेगुंठनवहिः अं
जनंपूरणंक्वाथंभोनमानेनशस्यते यथाक्षिरोगंमन्ये
तसरुजंव्यक्तिलक्षणं वेदनानिग्रहार्थंचकुर्यादाश्च्यो
तनंतदा आश्च्योतनंमारुतजेक्काथोबिल्वादिभिर्हितः
कोष्णमेरंडबृहतीतर्कारीमधुशग्रुभिः एरंडपल्लवेमूले
त्वचिचापिपयःसृतं कंटकार्याश्चमूलेषुसुखोष्णंसेचने
हितं ततःसंप्राप्तदोषस्यप्राप्तमंजनमाचरेत् हेमंतेशि
शिरेचैवमध्यान्हेजनमिष्यते पूर्वान्हेचापरान्हेचग्रीष्मश
रदिचेष्यते वर्षास्वनभ्रेनात्युष्णोवसंतेचसदैवहि रेणु
मात्रंप्रकुर्वीतवर्तिनेत्रांजनभिषक् प्रमाणमध्यमव्य
र्द्धंद्विगुणंचमृदौभवेत् विडंगमात्रंलवरमध्यंवाउत्तमा
त्रयं रसक्रियाणांवर्त्तीनांप्रमाणपरिकीर्तितं वैरेचनि
कचूर्णंतुद्विशलाकंविधीयते मृदौतुत्रिशलाकंस्यात्
चतस्रःस्नैहिकेंजने स्रुवर्णरूप्यताम्रायःकासाश्मा
सिमयाकृताः शलाकाश्चांजनेशस्ताअष्टांगुलमिताशु
भा वर्त्तयोमुशलाकाराःकलायपरिमंडलाः बृहत्येरंड-
मूलत्वक्शिग्रुमूलंससैंधवं अजाक्षीरेणपिष्टंस्याद्वर्त्ति

वोताक्षिरोगनुत् हरिद्रांमधुकंद्राक्षांदेवदारुचपेषयेत्
आज्येनपयसाश्रेष्टमभिस्यंदेतदंजनं प्रपौंडरीकंयष्ट्या
ह्वंनिशामलकपद्मकैः शीतैर्मधुसमायुक्तैःसेकःपित्ताक्षि
रोगनुत् कफजेलंघनंस्वेदोनश्यंतिक्तादिभोजनं तीक्ष्णैः
प्रमथनंकुर्यात्तीक्ष्णैश्चैवोपनाहकं फणिज्जकास्फोतक
पित्थबिल्वधत्तूरपीलुःरूक्षसार्जभृंगैः स्वेदंविदध्यादथवा
प्रलेपंवर्हिष्टशुंठीसुरदारुकुष्टैः शृंगीनिबदलैःपिंडःसुखो
ष्णःस्वल्पसैंधवः रोध्रमथाज्यंभ्रष्टंसौवीरंपिष्टंसितवस्त्रं
बद्धं आश्चोतनंतन्नयनामयस्यकुर्यात्कंडूदाहंचरुजं
चहन्यात् रूक्षोष्णैर्वातजःशांतिःपित्तजोमृदुशीतलैः
पिष्टैःसीतांबुनासेकैःरक्ताभिस्यंदनाशनः तिक्तस्यसर्पि
षापानंवहुशश्चविरेचनं अक्ष्णोरपिसमंतात्त्वपातनंच
जलौकसी पित्ताभिस्यंदशमनोविधिश्चायंविधीयते प
थ्यागैरिकसिंधूत्थदार्वीताक्ष्यैःसमांसकैः जलपिष्टैःव
हिर्लेपःसर्वनेत्ररुजापहः बिल्वपत्ररसःपूतःसाज्यःसल
वणान्वितः शुक्लेवयस्यरिष्टोवाधूपितोगोमयाग्निना
पयसालोडितश्चाक्ष्णोःपूरणात्शोफशूलनुत् अभिस्यं
दाधिमंथेचस्रावेरक्तेचशस्यते बिल्वाद्यंचूर्णं सलव
णकटुतैलंकांजिकंकांस्यपात्रेक्वथितमुपलघृष्टंधूपितं
गोमयाग्नौ सपवनकफकोपंछागदुग्धावसिक्तंजयतिन
यनशूलंश्चावशोफंसरागं अयमेवविधिःसर्वोमंथादिष

पिशस्यते अशांतेसर्वथामंथेभ्रुवोतुपरिदाहयेत् जलौ
कापातनंशस्तंनेत्रपाकेविरेचनं शिराव्यधंवाकुर्वीतसेका
लेपाश्चभुक्तवत् पथ्यास्तिस्रोविभीतकाषट्रधात्र्योर्द्वाद
शैवतुप्रस्थार्द्धंसलिलेक्काथमष्टभागावशेषितं पीत्वाभि
स्यंदमास्त्रावंरागंवातिमिरंजयेत् आगंतुरोगे प्रसमी-
क्ष्यकार्यंवक्रोष्मणास्वेदनमादितस्तु आश्चोतनंस्त्रीप
यसाचसद्योयच्चापिपित्तक्षतजेषुशस्तं सूर्योपरागानल
वैद्युतादिविलोकनेनोपहतेक्षणस्य संतर्पणंस्निग्ध
हिमादिकार्यंसायंनिषेव्यास्त्रिफलाप्रयोगः शिरोहर्षेंज
नंकुर्यात्फाणितंमधुसंयुतं मधुनाताक्ष्यशैलंवाकाशी
सवासमाक्षिकं वेतसाम्लस्तन्ययुक्तंफाणितंतुससैंधवं
गव्यंक्षीरोत्थितंसार्पिस्तर्पणार्थंविधीयते दृष्टिप्रसादनं
श्रेष्ठंतिमिरस्यापकर्षणं शंखस्यभागाश्चत्वारस्तदर्धेन
मनःशिला मनःशिलार्द्धंमरिचंमरिचार्द्धंचसैंधवं ए
तच्चूर्णंजिनंश्रेष्ठंशुक्रयोस्तिमिरेषुच वासाघनंनिंबपटो
लपत्रंतिक्तामृताचंदनवत्सकत्वक् कलिंगदार्वीदहनं
चशुंठीभूनिंबधात्रीविजयाविभीतं पाठांतरं समंय
वैःसाष्टमभागशेषंक्काथंपिबेत्तंदिनपूर्वभागे पिबेत्कषा
यंदिवसस्यपूर्वंपथ्यान्नभुक्नेत्रगदामयघ्नं शुक्रंतथा
सव्रणमव्रणंचदाहंसरागंसरुजंचहन्यात् वासादि
नूनंदृष्टिविनाशायतिमिरंसमुदाहृतं ऋषिभिस्त्वरितं

तस्मात्तस्यकुर्याच्चिकिस्सितं ठिद्यात्सदावात्रिफलां सुचूर्णितांघृतप्रगाढांतिमिरेथपित्तजे मधुप्रगाढांवि दधीतयुक्तितः कल्कक्काथोथवाचूर्णंत्रिफलायानिषे वितः मधुनाहविषावापिसमस्ततिमिरांतकृत् यस्त्रैफलं चूर्णमपथ्यवर्ज्जासायंसमस्नातिहविर्मधुभ्यां समुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथाक्षीणधनोनृपेंद्रः जातारोगावि नश्यंतिनभवंतिकदाचन त्रिफलायाःकषायेणप्रातर्नयन धावनात् भुक्तापाणितलंदृष्ट्वाचक्षुषोर्यदिदीयते अचिरे णैवकालेनतिमिराणिव्यपोहति कतकस्यफलंसंखंसैंधवं त्र्यूषणंसिता फेनोरसांजनंक्षौद्रंविडंगानिमनःशिला सर्वमेतत्समंकृत्वाछागक्षीरेणपेषयेत् तिमिरंपटलंकाचं मूर्षशक्रंव्यपोहति कंडूक्लेदार्बुदंहंतिमलंवासुसुखावती स्त्रखावतीवर्तिः हरीतकीवचाकुष्टंपिप्पलीमरिचानि च विभीतस्यचमज्जाचशंखनाभिर्मनःशिला सर्वमेत त्समंकृत्वाछागक्षीरेणपेषयेत् नाशयेत्तिमिरंकंडूंपटला न्यर्बुदानिच अंधकानिचमांसानियश्चरात्रौनपश्यति अपिद्विवार्षिकंपुष्पंमासेनैवविनाशयेत् वर्तिश्चंद्रोदया नामनृणांदृष्टिप्रसादिनी इतिचंद्रोदयावर्तिः दिनेनतु प्रयोक्तव्यंनेत्रयोस्तीक्ष्णमंजनं विरकदुर्बलादृष्टिरादि त्यंप्राप्यसीदति अशीतिस्तिलपुष्पाणिषष्टिपिप्पलितं डुलाः जातीकुसुमपंचाशन्मरिचानिचषोडश एषांकुसु

मिकावर्तिर्गतचक्षू निवर्त्तयेत् एकगुणामागधिकाद्वि
गुणाचहरीतकी सलिलपिष्टावर्त्तिरियंनयनसुखवाति
मिरार्मपटलकाचहारी अंजनंस्वेदमरिचंपिप्पलीमधुय
ष्टिका विभीतकस्यमध्यंतु शंखनाभिर्मनःशिला एता
निसमभागानिछागक्षीरेणपेषयेत् छायाशुष्काकृताव
र्तीनेत्ररोगेषुयोजयेत् अर्बुदंपटलंकाचंतिमिरंरक्तराजि
कां अधिमांसंबलंचैवयत्ररात्रौनदृश्यते वर्तिःचंद्रप्रभा
नाम्नरात्र्यंधमपिनाशयेत् इतिचंद्रप्रभावर्तिः पट्टगैरि
ककर्पूरयष्टीनीलोत्पलांजनं नागकेसरसंयुक्तमशेषति
मिरांतकृत् त्रिफलाभृंगमहौषधमध्वाज्यछागपयसि
गोमूत्रेण नागंसप्तनिषिक्तंकरोतिगरुडोयमंचक्षुः कृ
ष्णाछागयकृन्मध्येपक्वातद्रसपेषिता अचिराद्धंतिनक्तां
ध्यंतद्वत्सक्षौद्रमूषणं त्रिफलाक्काथकल्काभ्यांसप
यस्कंघृतंसृतं तिमिराण्यचिराद्धन्यात्पीतएतन्निशा
मुखे इतित्रिफलाद्यंघृतं पिप्पलीत्रिफलाद्राक्षालो
हचूर्णंससैंधवं भृंगराजरसेघृष्टंगुटिकांजनमिष्यते
अर्मंसतिमिरंकाचंकंडूंशुक्रंतथार्बुदं अनेकान्नेत्ररो
गांश्चहन्यान्निरवशेषतः गैरिकंसैंधवंपथ्यापलाशत
रुशोणितं क्रमवृद्धमिदंचूर्णंशुक्रामर्दिविलेखनं पुष्पा
क्षतार्क्षजसितोदधिफेनशंखसिंधूत्थगैरिकशिलाम
रिचैःसमांशैः पिष्टैःसमाक्षिकरसेनरसक्रियेयंहन्त्यर्म

काचतिमिरार्जुनवर्त्मरोगान् प्रवालमुक्तावैडूर्यशंख-
स्फटिकचंदन सुवर्णरजतं क्षौद्रं अंजनंशुक्रकापहं
अर्जुनः शर्करामस्तुक्षौद्रैश्वाश्चोतनंहितं शंखः क्षौद्रेण
संयुक्तः कतकं सैंधवेनवा सितयार्णवफेनोवापृथगं
जनमर्जुने पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येक
भागैः विदधीतवर्तिः तयांजयेदसृगतिप्रवृद्धमक्ष्णोर्ह
रेत्कष्टमपिप्रकोपं शिलारसांजनव्योषगोपित्तैश्च-
क्षुरंजनं हरितालवचादारुसुरसारसपेषितंअभया
रसपिष्टंवातगरंपिल्लनाशनं मंजिष्टामधुकोत्पलोद
धिकफत्वकुसोध्यगोरोचना मांसीचंदनशंखपत्र
गिरिमृत्तालीसपुष्पांजनैः सर्वैरेवसमंसमांजनमिदं
शस्तंसदाचक्षुषोः कंडूदाहमलाश्रुशोणितरुजापि
ल्लार्मशुक्रापहं चूर्णांजनं तुत्थकस्यफलंश्वेतमरि
चानिचविंशतिः त्रिंशताकांजिकपलैःपिष्टाताम्रेनि
धापयेत् पिल्लानिपिल्लीकुरुतेबहुवर्षस्थितान्यपि त
त्सेकेनोपदेहास्तुकंडूशोफास्तुनाशयेत् प्रवृद्धांतमु
खान्रोमासहिष्णोरुद्धरेच्छनैः संदंशेनोद्धरेदृष्ट्यापक्ष्म
रोमाणिबुद्धिमान् रक्षन्नक्षिदहेत्पक्ष्मनमहेमशला
कया पक्ष्मकोशेपुनर्नैवकदाचिद्रोमसंभवः त्रिफ
लाघृतं मधुयवाःपदाभ्यंगःशतावरीमुद्गाः चक्षुष्य
संक्षेपाद्वर्गःकथितोभिषग्भिरयं जीवंतिशाकंसुनिष-

धाकंचसतंदुलीयंवरवास्तुकंच चिल्लीनथामूलकपोति
कान्वृष्टेर्हिताशाकुनजांगलंच पटोलककर्कोटककारवेल्ल
वार्त्ताकतर्कारिकक्षीरजानि शाकानिशिग्म्रार्तगलानि
चैवहितानिदृष्टेर्घृतसाधितानि कट्वम्लगुरुतीक्ष्णोष्णं
माषपिण्याकमैथुनं मद्यंवल्लूरनिष्पावमत्स्यानूशाकं
विरूढकं विदाहीन्यन्नपानानिनेत्ररोगीविवर्जयेत्
इतिवीरसिंहावलोकेनेत्ररोगाधिकारः अथक्रमप्राप्त
स्यशिरोरोगस्यज्योतिःशास्त्राभिप्रायेणहेतुमाह त
त्प्रतीकारंच यदुक्तंजातके शिरसोरुगलरोगश्चित्रंस
हसाज्वरंशूलं तपनदशायांशुक्रेदेहत्यागोभवेदरिभिः
तथाच अंतर्दशायांशिनस्यशशिनोयदाशशीभवति
तदाशिरोरोगबुधस्यांतर्गतेकुजेपिशिरोरोगः अन्यच्च
मस्तकशूलविरोधैर्नानाक्लेशैश्चयुज्यतेजंतुः इंदुसुत-
स्यदशायांभौमस्यांतर्दशायदाभवति अथतपनद
शायांशुक्रेवर्तमानेशिरोरोगदर्शनेशुक्रप्रीतयेपूर्वोक्त-
मेवकुर्यात् अथसर्वेषांपूर्वोक्तंकुर्यात् अथशिरोरोग
स्यकर्मविपाकेहेतुमाह तत्प्रतीकारंच गुरूपरोधी-
शिरोरोगीभवति वैद्यशास्त्रोक्तान्यौषधानिदद्यात् प्रा
योपवेशनेननैष्टिकादिव्रतत्यागीशिरोरोगीभवति पंचा
शद्ब्राह्मणभोजनंकुर्यात् उद्यन्नद्येसूक्तंजपेत् कूष्मां
डीभिर्जुहुयात् अपरंच ब्रह्मचारीपूर्वजन्मनिभिन्न

कांस्यपात्रेभुक्त्वाएकदेशशिरोरोगीभवति अक्षि-
भ्यामितिसूक्तमष्टोत्तरशतंजपेत् चरुघृताभ्यांजुहुयात्
वैद्यशास्त्रोक्तान्यौषधानिदद्यात् ब्रह्मचारीयदाश्नीया
त्भिन्नपात्रेविशेषतः एकदेशशिरोरोगीभवतीत्याह-
नारदः नारदीयपुराणवचनात् द्वादशब्राह्मणभोजनं-
इत्यर्द्धशीर्षरोगः ब्राह्मणोर्द्धशिरोरोगीवायुपुराणात्
सउपवीतंपलार्द्धेनवातदर्द्धेनहिरण्येननिर्मितंयथाविभ
वतोपिवा उत्तरीयंचविमलंनवतंतुसंख्ययाकृतं ब्राह्म
णायाग्रवेदायश्रोत्रियायोपपादयेत् मंत्रेणानेनविधि
वत्पूजितायांगुलीयकैः धाताविधाताजगतांपरमात्मा-
चतुर्भुज विनाशयतुमेक्षिप्रंरोगवेगंशिरोगतं इतिशि-
रोरोगहरः अथक्रमप्राप्तस्यशिरोरोगस्यसनिदानं-
चिकित्सितमाह सुश्रुतात् शिरोरुजातिसर्त्वानांवात
पित्तैःकफैस्त्रिभिः संनिपातेनरक्तेनक्षयेणकृमिभि-
स्तथा सूर्यावर्तानंतवातार्द्धावभेदकशंखकैः एकाद-
शविधस्यास्यलक्षणंसंप्रवक्ष्यते यस्यातिमात्रंशिरसो
रुजश्चभवंतितीव्रानिशिचातिमात्रं बंधप्रतापैश्चभवे
द्विशेषःशिरोभितापस्तुसमीरणेन यस्योष्णमंगारचि
तंतथैव दह्येतधूप्येतशिरोक्षिनासांशीतेनरात्रौचभ
वेद्विशेषः शिरोभितापःसतुपित्तकोपात् यथास्वभाव
यदन्यान्दोषैस्तैस्तैःप्रकोपनैः वातिकेशिरसोरोगेस्नेह

स्वेदान्समाचरेत् यवान्नमुपनाहांश्चकुर्याद्वातामयापहान् कुष्ठमेरंडमूलंचलेपः कांजिकपेषितः शिरोर्तिनाशयत्याशुपुष्पंवामुचकुंदजं पंचमूलीसृतंक्षीरंनश्यंदद्यात्रिरोगदे आशिरोव्यायतंचर्मषोडशांगुलमुछ्रितं तेनावेष्ट्य शिरोधस्तात्माषकल्केनलेपयेत् नैश्चल्येनोपनोपविष्टस्यतैलैरुष्णैःप्रपूरयेत् धारयेदातुरःशांतोयामंयामार्द्धमेवच शिरोवस्तिर्जयत्येषाशिरोरोगंमरुद्भवं हनुमन्यार्तिकर्णार्तिमर्दितंमूर्द्धकंपनं तैलेनापूर्यमूर्द्धानपंचमात्राशतानिच निष्टेत्श्लेष्माणिपितोष्टोदशवातशिरोगदी स एवविधिवत्कार्योतथाकर्णाक्षिपूरणे पितात्मकेशिरोरोगेस्निग्धंसम्यग्विरेचनं मृद्वीकात्रिफलेक्षूणांरसैःक्षीरैर्घृतैरपि शर्कराक्षीरसलिलैःशिरश्चपरिषेचयेत् सर्पिषःशतधौतस्यशिरसाधारणंतथा निमज्जनंचशिरसःशीतलेंभूसिशस्यते कुमुदोत्पलपद्मानांशीतानांचंदनांबुभिः स्पर्शास्त्रुखाश्चपवनाःसेव्यादाहार्तिशांतये चंदनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः यष्ट्याह्वचंदनानंताक्षीरसिद्धंघृतंहितं नावनंशर्कराद्राक्षामधुकैर्वापिपित्तजे रक्तजे पित्तवत्सर्वंभोजनालेपसेवनं शीतोष्णायाश्चविन्यासोविशेषरक्तमोक्षणे कफजेलंघनंस्वेदोरूक्षोष्णैःपाचनात्मकैः तीक्ष्णाचपीडधूमाश्चतीक्ष्णाश्चकवलाहिताः अक्षंचपयसेसर्पिःपुराणंस्वेदयेन्नरः मधूकसारेणशिरःस्विन्नवा

स्थविरेचयेत् कुष्टाञ्जभुंठीमधुकंशताव्होत्पलपाठलैः जलपिष्टैःशिरोलेपःसद्यःशूलनिवारणः देवदारुनतंकुष्टं नलदंविश्वभेषजं लेपःकांजिकसंपिष्टस्तैलसैर्युक्तःशिरो क्तिनुत् संनिपातभवेकार्यदोषत्रयहिताःक्रियाः सर्पिः पानंविशेषेणपुराणंवानिशंतिहि त्रिकटुकपुष्करबीजं करंजनीराव्हतुरंगगंधानां क्वाथःशिरोर्तिजालंनासार्पि तोनिवारयति नागरकल्कविमिश्रंक्षीरंनस्येनयोजितं पुंसां नानादोषोद्भूतांशिरोरुजंहंतितीव्रतरां सूर्यावर्ते विधातव्यंनस्यकर्मादिभेषजं पाययेत्सगुडंसर्पिःघृत पूरांश्चभक्षयेत् सूर्यावर्तेशिरावेधोनावनंक्षीरसर्पि षा हंतिक्षीरघृताभ्यांचनस्यानिचविरेचनं क्षीरपिष्टै स्तिलैःस्वेदोजीवनीयैश्चशस्यते सशर्करंकुंकुममाज्यभृ ष्टंनस्यंविधेयंपवनासृगुत्थिते भ्रूशंखकर्णाक्षिशिरो र्द्धशूलेदिनाभिवृद्धेशिर शश्च रोगे जांगलानिचमांसानि कारयेदुपनाहनं तेनाशुसाम्यतेव्याधिः सूर्यावर्तःसुदा रुणः धान्यार्कपथ्याक्षनिशागुडूचीभूनिंबनिंबक्वथितः षडंगः भ्रूशंखकर्णाक्षिशिरोर्द्धशूलेसूर्योदयेशंखक मूर्द्धभेदे महौषधंसस्करसंवचापिप्पलिभिःकृतं अ थपीडंप्रदातव्यंसूर्यावर्तनिसूदनं एषएवविधिःकार्यो कृत्स्नश्चार्द्धार्किमोदकैः दार्वीहरिद्रामंजिष्टासारिवोशी रपद्मकं एतदालेपनंकार्यंशंखकस्यप्रशांतये एषए

वमयोक्तव्यः शिरोरोगेक्षयात्मके पिबेत्सशर्करंक्षी रंक्षीरंवानारिकेरजं शिरावेधश्चकर्तव्योऽनंतवात् प्रशांतये एरंडमूलंतगरंशताव्हाजीवंतिरास्नासहसैं धवेनभृंगंविडंगंमधुयष्टिकांचविश्वौषधंकृष्णातिलस्य तैलं अजापयस्तैलविमिश्रितंचचतुर्गुणेभृंगरसेविप क्कं षड्विदवोनाशिकयाविधेयाशीघ्रंनिहन्युःशिरसोवि कारान् च्युतांश्चकेशान्चलितांश्चदंतान्दृढमूलां श्चदृढीकरोति इतिवीरसिंहावलोकेशिरोरोगाधिका रः अथक्रमप्राप्तस्यप्रदर रोगस्यज्योतिःशास्त्रा भिप्रायेणहेतुमाह तत्प्रतीकारंच स्त्रीणांविवाहकाले अष्टमस्थानस्थितेभौमेरक्तस्त्रावोभवति व्यहादूर्द्धस पिन्ननिवर्त्तते इतिमहादेवभाष्येनद्रोगप्रतीकारोय- पूर्वोक्तमेवकुर्यात् भौमप्रीतयेविधानं अथकर्मविपा केहेतुमाह अथगर्भस्त्रावेबोद्धायनः स्त्रवद्गर्भभवे त्सातुबालकंहंतियापुरा वायुपुराणे यज्ञोपवीतंकुर्वी तकांचनंतुस्वशक्तितः अत्यंतवर्णयुक्तेन राजतंचोत्तरी यकं पलार्द्धेनतदर्द्धेनतदर्द्धार्द्धेनवापुनः ग्रंथिप्रदेशेदेयं तुमौक्तिकंवज्रमेववा प्रक्षाल्यपंचगव्येनगायत्र्याताम्र भाजने यामप्रमाणंतस्मिंश्चनिक्षिपेद्दूधिमध्यतः आ ज्येनपरिसंस्थाप्यउपवीतंसुपूजितं गंधपुष्पाक्षतैर्धूपै र्नैवेद्यैश्चस्वशक्तितः ततोब्राह्मणमाहूयहोमंतत्रचकारये

त् तिलैराज्येनमधुनामिश्रैरष्टोत्तरशतं तस्मैहुतवते देयंवस्त्राद्यैःपूजितायतु मंत्रेणानेनविधिवत्प्राङ्मुखा यस्कमंत्रकं उपवीतंपरमिदंब्रह्मणाधिधृतंपुरा भवते कांचनंदद्यात्गर्भसंधारयेत्त्वहं दानमंत्रः तथान्य दपिब्राह्मणेभ्यस्तस्मिन्कालेदद्यात् अनुव्रज्यतथा- कार्यंप्रणिपत्यक्षमापयेत् गर्भस्रावभवाद्दोषादेवंकृत्वा विमुच्यते इतिगर्भस्रावेयज्ञोपवीतदानविधिः अथ पूर्वजन्मनिपित्रामात्रागुरूणांवासार्द्धस्पर्द्धतिसाप्रदररो गिणीभवति साकृच्छ्रातिकृच्छ्रंकुर्याच्चान्द्रायणानिचकुर्यात् तद्विष्णोरितिमंत्रंजपेत् अयुतत्रयंआज्यसहितंमधुमं डकान्नंदद्यात् विप्रपादप्रक्षालितोदकेनसंमार्जनं वि प्रोच्छिष्टेनानुलिंपेत् याइत्थंकरोतितस्याअवश्यंचिकि त्सायांरोगोनश्यति यथोक्तेतुव्रतेचीर्णेयथोक्तफलभा ग्भवेत् इतिपितामहवचनात् पुरुषस्यापिद्रष्टव्यं इतिप्रदरव्याधिहरोविधिः वृश्चिकराशिस्थेशुक्रेस्त्रीणां योनिदोषोजायते स्त्रीपुंसयोर्जन्मफलतुल्यत्वात् शुक्रजनितोपशांतयेपूर्वोक्तमेवकुर्यात् अथस्त्रीणां योनिदोषेकर्मविपाकेहेतुमाह तत्प्रतीकारंच मृतेभ र्तरियानारीब्रह्मचर्यविघातिनी साभवेद्व्रणदोषेण संक्षोभंक्षमतेनतु संभोगानंतरंतीव्रवेदनापुरुषस्य तु सानीलवृषभांस्त्रीन्दद्यात्मधुसर्पिस्तिलानपि

दद्यात् योनिहृदानं अथक्रमप्राप्तस्ययोनिदोषस्य
सनिदानंचिकित्सितमाह रुग्विनिश्चयात् विरुद्धम
द्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च यानातिशो
कादतिकर्शनाच्चभाराभिघाताच्छयनाद्दिवाच्च असृग्दरं
भवेत्सर्वसांगमर्द्दसवेदनं तस्यातिवृद्धौदौर्बल्यंभ्रमोमू
र्छामदस्तृषा दाहःप्रलापःपांडुत्वंतंद्रारोगाश्चवातजाः
तश्लेष्मपित्तानिलसंनिपातैः चतुःप्रकारंप्रदरंवदंति वृंद
संग्रहात् दध्नासौवर्चजाजीमधुकंनीलमुत्पलं पिबेत्
क्षौद्रयुतंनारीवातासृग्दरपीडिता पिबेदैणेयकंरक्तंशर्क
रामधुसंयुतं वासकस्वरसोपेतंगुडूच्यारसमेववा रो
हीतकान्मूलकल्कंपांडुरेसृग्दरेहितं जलेनामलकाद्वी
जकल्कंवासासितामधु धातक्यश्चामलक्यावाअक्ष
मात्रंमधुद्रवं काकजानुकमूलंवामूलंकार्पासमेववा
पांडुप्रदरशांत्यर्थंपिबेतंदुलवारिणा अशोकवल्कल
क्वाथःसृतंदुग्धंसुशीतलं यथाबलंपिबेत्प्रातःतीव्रा
सृग्दरनाशनः दार्वीरसांजनकिराततृषाब्दबिल्वभल्ला
तकैरवकृतोमधुनाकषायः पीतोजयत्यतिबलंप्रदरंस
शूलंपीतासितारुणविलोहितनीलशुक्लं रसांजनंतं
दुलिकस्यमूलंक्षौद्रान्वितंतंदुलतोयपीतं असृग्दरंस
र्वभवंनिहंतिश्वासंचभार्गीसहनागरेण कुशमूलंसमु-
द्धृत्यपेषयेत्तंदुलांबुना एतत्पीत्वात्र्यहान्नारीप्रदरात्प्रमु

मुच्यते क्षौद्रयुक्तंफलरसंकाष्टोदुंबरजंपिवेत् असृग्द
रविनाशायसशर्करपयोन्नभुक् प्रदरंहंतिवलायामूलंदु
ग्धेनमधुयुतंपीतं कुशवाश्मलकमूलंतंदुलसलिलेनर
क्ताख्यं शमयतिमदिरापानंतदुभयमपिरक्तसंज्ञश्शु-
क्लाख्य तरुण्याहितंसेविन्यास्तदल्पोपद्रवंभिषक्
रक्तपित्तविधानेनयथावत्समुपाचरेत् पाठाजंब्वाम्र
योर्मध्यंशिलाभेदरसांजनं अंवष्टकीमोचरसःसमंगा
पद्मकेसरं वाल्हीकातिविषेमुस्तंबिल्वंरोध्रंसगैरि
कं कट्फलंमरिचंशुंठीमृद्वीकारक्तचंदनं कट्वंगवत्स
कानंताधातुकीमधुकार्जुनं पुष्पेणोधृत्यतुल्यानिसू
क्ष्मचूर्णानिकारयेत् तानिक्षौद्रेणसंयोज्यपाययेत्तं
दुलांबुना अर्शेषुचातिसारेषुरक्तंयश्चोपवेश्यते दोषा
जंतुकृतायेचबालानांतांश्चनाशयेत् योनिदोषंरजोदोषं
श्वेतपीतंसनीलकं स्त्रीणांश्यावारुणंयच्च ततप्रस-
ह्यनिवारयेत् चूर्णपुष्यानुगंनामहितमात्रेयपूजितं
इतिपुष्यानुगंचूर्णं मुद्गमाषस्यनिर्यूहोरास्नाचित्र
कनागरैः सिद्धःसपिप्पलीबिल्वैःसर्पिःश्रेष्टमसृग्दरे
मुद्गाख्यंघृतं इतिवीरसिंहावलोकेअसृग्दराधिका
रः अथक्रमप्राप्तस्ययोनिव्यापदःसनिदानंचिकित्सि
तमाह रुग्विनिश्चयात् विंशतिर्व्यापदोयोनेर्निर्दि
ष्टारोगसंग्रहे मिथ्याचारेणताःस्त्रीणांप्रदुष्टेनार्तवे

नच जायंतेवीर्यदोषाच्चदैवाच्चभृणुताःपृथक् सफेनि
लमुदावृत्तारजः कृच्छ्रेणमुंचति वंध्यानष्टार्तवाविद्याद्वि
प्लुतांनित्यवेदनां परिप्लुतायाभवतिग्राम्यधर्मेणरुग्भृशं
वातलाःकर्कशास्तब्धाःशूलतास्तोदपीडित चतसृ-
ष्वपिचाद्यासुभवंत्यनिलवेदनाः योनिव्यापत्सुभूयिष्टं
शस्यतेकफवातजित् वस्त्यंगपरिषेकश्चप्रलेपपिचुधा
रणं वचोपकुंचिकाजाजीकृष्णावृषकसैंधवैः अजमोदा
यवक्षारचित्रकंशर्करान्वितंपिष्टाप्रसन्नयालोड्यखादेत्तद्घृ
तभर्जितं योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवर्तये राँ
स्नाश्वदंष्ट्रावृषकैःशृतंशूलहरंपयः गुडूचीत्रिफलादंतीक्का
थश्चपरिषेचनं नतंवार्ताकिनीकुष्टसैंधवामरदारुभिः तै
लात्प्रसाधिताद्धार्यःपिचुर्योनौरुजापहः पित्तलानांतुयो
नीनांसेकाभ्यंगपिचुक्रिया शीताःपित्तहराःकार्याःस्नेह
नार्थघृतानिच योन्यावलासदुष्टायाःसर्वरूक्षाम्लमौष
धं पिप्पल्यामरिचैर्माषैःशताह्वाकुष्टसैंधवैः वर्तिस्तुल्या
प्रदेशिन्याधार्यायोनिविशोधने पुष्पोद्धृतंलक्ष्मणायाः
मूलंपिष्टंचकन्यया कृतंतेघृतदुग्धाभ्यांपीत्वाभोत्यब
लासकृतं मंजिष्टामधुकंकुष्टंत्रिफलाशर्करावला मेदा
वयस्याकाकोलीमूलंचैवाश्वगंधजं अजमोदाहरिद्रे
द्वेहिंगुतिक्तकरोहिणी उत्पलंकुमुदंद्राक्षाकाकोल्यौ
चंदनद्वयं एतेषांकार्षिकैर्भागैःघृतप्रस्थंविपाचयेत्

शतावरीरसक्षीरं घृतंदेयंचतुर्गुणं सर्पिरेतन्नरःपीत्वा स्त्रीषुनित्यंवृषायते पुत्रानूजनयतेनारीमेधाढ्यान्प्रियदर्शनान् यावैवास्थिरगर्भास्यात्यावैजनयतेमृतं अल्पायुषंवाजनयेत्यावकन्याप्रसूयते योनिदोषेरजोदोषेपरिश्रावेचशस्यते प्रभावर्द्धनमायुष्यंसर्वग्रहनिवारणं नाम्नाफलघृतंह्येतदश्विभ्यांपरिकीर्तितं अनुक्तंलक्ष्मणामूलंक्षिपेदत्रचिकित्सकः फलघृतं इति वीरसिंहावलोकेज्योतिःशास्त्रोक्तकर्मविपाकायुर्वेदोक्तप्रयोगोयोनिव्यापच्चिकित्सा अथज्योतिःशास्त्राभिप्रायेणगर्भिणीनांमासप्रसवकालेगर्भरक्षाप्रकारमाह कलिलंघनावयवास्थित्वङ्रोमस्मृतिसमुद्भवाः क्रमशः मासेषुशुक्रकुजजीवसूर्यचंद्रार्किसौम्यानां असतोह्यंगःप्रसवारतोलग्नेशचंद्रसूर्याणां कलुषैःपीडापतनंनिपीडितैर्निर्मलैःपुष्टैः तत्तन्मासस्संबंधेसकलुषनिपीडितग्रहजनितगर्भबाधोपशांतयेमाससंख्याधिपग्रहाणांजपहोमपूजादिकंकारयेत् तेनगर्भोपशाम्यति अथकर्मविपाकाभिप्रायेणगर्भिण्याः प्रतिमासं गर्भरक्षाप्रकारमाह प्रथमेमासेगर्भिण्याःगर्भरक्षामुद्दिश्यब्राह्मणेबलिंदद्यात् पायसघृतश्वेत वस्त्रचंदनछत्रांगुलीयकवचरत्नगर्भगंधपुष्पधूपदीपहिरण्यसहितपूर्णकुंभेनादायबलिंक्षिपेत् शुद्धात्माबलिंह

र्तातस्मैदक्षिणांचदद्यात् अनेनमंत्रेणएह्येहिभगवन्नम्र-
स्तनुभजाकर्त्तःप्रजापते प्रगृण्हीष्वबलिंचेमांसापत्यांरक्ष
गर्भिणीं द्वितीयमासेगर्भरक्षार्थैअश्विभ्यांबलिंदद्यात्
पायसदध्यन्नलाजातिलपिण्याकवस्त्रहिरण्यजलपूर्ण
कुंभादिरलंकृत्याश्विभ्यांबलिंदद्यात् अनेनमंत्रेणअश्वि
नौदेवदेवेशौप्रगृण्हीतबलिंत्विमां सापत्यांगर्भिणींचेमां
रक्षतंपूजयानया राजान्नलाजाश्वेतध्वजहिरण्यवस्त्र
गंधादिभिरेकादशरुद्रेभ्योजलाशयेतृतीयमासरक्षार्थैब
लिंदद्यात् अनेनमंत्रेणरुद्राश्चैकादशप्रोक्ताःप्रगृण्ह
तुबलिंत्विमां युष्माकंप्रीतयेवृत्तंनित्यंरक्षतगर्भिणी
अथचतुर्थमासिगर्भरक्षार्थैरक्तान्नध्वजगंधपुष्पवस्त्र
हिरण्यादिभिः पूर्वस्थानेद्वादशादित्येभ्योबलिंदद्यात्
आदित्या द्वादशप्रोक्ताःप्रगृण्हीध्वंबलिंत्विमां युष्माकंते
जसावृध्यानित्यंरक्षतुगर्भिणी अथपंचमेमासेपक्वाप
क्वमांसपक्वापक्वान्नद्राक्षाफलमाध्वीपैष्टीसुराशर्करामा
धुमधुकेक्षुतिलपिष्टपूपलाजाहिरण्यादिभिः सहकारमू
लेगर्भरक्षार्थैगोमयेनविनायकंकृत्वावस्त्रयुग्मादिना-
संवेष्टयसंपूज्यानेनमंत्रेणबलिंदद्यात् विनायकगणा
ध्यक्षशिवपुत्रमहाबलप्रगृण्हीष्वबलिंचेमांसापत्यांरक्ष
गर्भिणीं अथषष्टेमासेपायसघृतशर्करालाजाहरिद्रान्न
कृशरान्नविशिष्टंपूर्ववदनेनमंत्रेणप्रभातसमये नदीती

षेगर्भरक्षायैस्कंदायबलिंदद्यात् अनेनमंत्रेण स्कंद
षण्मुखदेवेशपुत्रप्रीतिविवर्द्धन प्रगृण्हीष्वबलिंचेमंसा
पत्यांरक्षगर्भिणीं अष्टवसुभ्योवा अथसप्तमेमासि
पायसलाजाशर्कराघृतसहितंहरिद्राध्वजसर्वालंकारभूषि
तं बलिमाहर्त्तातुरक्तवस्त्रद्वयवेष्टितशरीरोनदीतीरेद
द्यात् प्रभास प्रभवःश्यामःप्रत्यूषोमारुतोनलः ध्रुवो
धराधरश्चैववसवोष्टौप्रकीर्त्तिताः प्रगृण्हीध्वंबलिंचेमां
नित्यंरक्षंतुगर्भिणीं अष्टमेमासिगर्भरक्षायैदुर्गायैबलिं
दद्यात्पूर्वोक्तेनविधानेनमातृकाभ्योवा दध्यन्नमुद्ग
कृशरान्नलाजापक्वापक्वमत्स्यमांसस्त्रक्ष्रेक्षुरसगंधकृ
ष्णवस्त्रकुक्कुटगंधपुष्पधूपदीपहिरण्यसहितनीलोत्प
लसहितेनपूर्वोक्तविधिनालंकृत्यदक्षिणस्यांदिशिबलिं
क्षिपेत् पितृदेविपितृज्येष्टेबहुपुत्रिमहाबले भूतश्रेष्टे
दिशावासेनिर्वृत्तेशौनकप्रिये प्रगृण्हीष्वबलिंचेमंसा
पत्यांरक्षपुत्रिणीं नवमेमासेगर्भरक्षायैदध्यन्नमुद्ग
कृशरान्नविशिष्टंपूर्ववदनेनमंत्रेणप्रभातसमयेबलिं
दद्यात् रक्षरक्षमहादेवभक्तानुगृहकारक पक्षिवाह
नगोविंदसापत्यांरक्षगर्भिणीं अथदशमेमासे पा
यसगुडपूपलाजापिष्टशक्तुभिः श्यामध्वजकृष्णागंध
पुष्पधूपदीपहिरण्यसहितपूर्णकुंभेननीलोत्पलसहि
तेनादायपूर्वोक्तविधानात् बलिंहर्त्ताअलंकृत्यवासुदे

वालयेअभ्यर्च्यवृक्षमूलेत्तानिक्षिपेत् अनेनमंत्रेणत्रिवि
क्रमक्रमाक्रांतभूरिभूतजगन्मय गोवर्द्धनमहाशैलस-
मुद्धरणकारक हिरण्यकशिपुर्वक्षोविदारणनखांकुर
विक्रमेणस्फुरज्येष्टरक्तांगेनमहाज्वलः वलदेवानुजज्येष्ट
कंसचाणूरकंपन गरुडध्वजदैत्यारेनंताच्युतचतुर्भुज
विधुंतुदप्राणहरआदित्यकृतचक्रभृत् भीषणाकार
भुजगशयानेंदीवरछवे पांचजन्यप्रभाव्यक्तकौस्तुभो
द्योतविग्रह वाराहवपुषापूर्वसम्यक्धृतवसुंधर सार्
गज्याघातरुचिमक्रिरणांकितमहाभुज अनाद्यंतासुररिपो
धीरपद्मालयालयप्रगृण्हीष्वबलिंचेमं सापत्यां रक्षगर्भि
णीं इतिगर्भरक्षाविधिः अथस्त्रीणांस्तनक्षीरा
भावेविवाहकालेचतुर्थस्थानस्थितशनिजनितपयो
हीनत्वदोषोपशांतयेप्रागुक्तंशनिविधानंपूजादिकंकुर्या
त् अथपयोहीनत्वेकर्मविपाकेहेतुमाह पूर्वजन्मनि
क्षीरंमुष्णातितस्याजन्मांतरेस्तनौनक्षरतिसाविप्रेभ्यः
क्षीरान्नंदद्यात्विप्रपादोदकेनस्तनावपामार्जनस्तोत्रे
णमार्जयेत् विप्रोछिष्टेनस्तनावनुलेपयेत् सुरामांसमधु
कृतानांगंधपुष्पादिभिर्भूतेभ्योबलिंदद्यात् मधुनानव-
नीतपिंडमालोड्यवितुन्नकभूतभव्यशक्तिभेदेनभूतानां
पंचकंत्विदमिदंभूतानि क्षीरंमुष्णातियानारीपूर्वजन्म
निसुव्रता जन्मांतरेतुतस्यावैक्षीरनक्षरतस्तनौ क्षीरसं

भोजयेद्विप्रान् साज्यंमधुकसंयुतं तेनैववासानुलि
प्येदुच्छिष्टंतेनभक्तितः विप्रपादोदकैश्चापिक्षालयेत्कु
चमंडलमिति इतिवीरसिंहावलोकेपयोहीनत्वाधि
कारः अथस्त्रीणांस्तनस्फोटरोगकर्मविपाकेहेतुमा
ह भर्तारमवमान्यवर्ततेअन्यपतिंमनसिधत्ते तमेवा
नुस्मरति जन्मांतरेतस्यास्तनेस्फोटाःजायंते भगेच
श्रोणितंभवति तद्रोगोपशांतयेतामग्निवर्णामितिसूक्तं
जपेत् धनेसतिनिष्कद्वादशकंदद्यात् शक्त्यापेक्षया
वा अथवाधान्यतिललवणानिदद्यात् हरिद्रांचदद्यात्
उमामहेश्वरप्रीतयेपूजांचकुर्यात् इतिस्तनस्फोटे
अथगर्भिणीनांकर्मविपाकाभिप्रायेणमूढगर्भत्वहेतु
माह मलिनोरूपपूर्वेवाबालकंहंतियापुरा अथवाचत्र
ह्महापुंसांपुत्रपुत्रीक्षयोभवेत् पलेनैकेनकुर्वीततदर्द्धेन
चकारयेत् तथाचमहिषीदानंसुशोभितांदक्षिणायुतां
अथवाच बालंकृत्वाआचार्यायनिवेदयेत् कृच्छ्रातिकृ
च्छ्रचांद्रायणंकुर्यात् ब्राह्मणान्भोजयेत् आपोहविष
मंत्रेणआचार्यायदद्यात् पूर्वकर्मक्षयोभवति अथज्योतिः
शास्त्राभिप्रायेणहेतुमाह तत्प्रतीकारश्च लग्नेशनेश्वरांशेशनेश्वरेद्यूनगे
यदिनिषेकःवर्षत्रयेणप्रसूतिर्द्वादशभिः स्यात्शनिनैवं लग्नस्वांशस
प्तमभवनस्थितशनिचंद्रजनितबाधोपशमनायपृथक्
पूजादिकंकुर्यात् अथकर्मविपाकाभिप्रायेणहेतुमाह

पूर्वजन्मनिपर निक्षेपहारिणीमृदगर्भिणीभवति श्रा
द्धादिपितृकर्मलोपिनीच तदुपशांतयेगांस्कवर्णंचदद्या
त् पंचाशद्ब्राह्मणभोजनंचकारयेत् पुष्करिण्यादिकंच
कारयेत्तेनशाम्यति अथनारीणांज्योतिःशास्त्राभिप्रा
येणवंध्यात्वहेतुमाह विवाहेसप्तमभवनस्थितेबुधेवंध्या
चेति श्रीपतिवचनात् सप्तमगेपापदृष्टेशनौकन्येवज
शंसमुपयातीतिवंध्यत्वंसूचयति तद्दोषोपशांतयेबुध
शनिप्रीतये पूर्वोक्तमेवक्रमेणपूजादिकंकुर्यात् अथवं
ध्यायाःकर्मविपाकेहेतुमाह तत्प्रतीकारंच चतुर्विधातुया
वंध्याभवेत्साचवियोजनात् वक्ष्येतस्याःप्रतीकारंतत्स्व
रूपंनिबोधमे हिरण्येनयथाशक्त्यासवत्सांकारयेद्दृढं
धेनुःपलेनवत्संचपादेनगुरुरब्रवीत् धेनुरौप्यखुरार-
त्नंतस्याःपुच्छेनियोजयेत् घंटांगलेचवध्नीयात्सवत्सां
प्राङ्मुखःशुचिः चंदनागरुकर्पूरैर्गंधमाल्यैःसुशोभनैः
उपचारैःषोडशभिःनैवेद्यंपायसंभवेत् मोदकंचतथापूपं
गुडंलवणमेवच जीरकंचस्कविस्तीर्णेसूर्पेवेणुमयेदृढे
धेनोरेकंप्रदातव्यंब्राह्मणस्त्रीषुचैवहि षडष्टौदशवाद
द्यात्तदनंतरमेवच ब्राह्मणंसर्वशास्त्रज्ञंकुशलंधर्मवेदि
नं धेनुरितिमंत्रंसमुच्चार्यततः विद्याविनयसंपन्नंशां
तंचैवयतेंद्रियं अलोलुपंसर्वजनप्रियंकल्मषनाशनं
आहूयभक्त्यासंपूज्यवस्त्राद्यैर्गंधपुष्पकैः तेनैवकार

येत्पूजांपादतोधेनुवत्सयोः होमंचकारयेत्तत्रसमिदाज्यच
रुत्करं सोमोधेनुरितिमंत्रंसमुच्चार्यततःपुनः प्राङ्मुखा
योपविश्यायप्रदद्यात्तामुदङ्मुखः मंत्रेणानेनविधिवत्पु
छेहस्तंविधायच धेनुर्यांगिरसःसत्रेविष्णोस्तुसुरभीच
या दुहिताथातथाभानोरग्नेश्चवरुणस्यच याश्चगावः
प्रवर्त्ततेवनेषूपवनेषुच प्रीणंतुताममसदापुत्रपौत्रप्रदासु
खं प्रयच्छंतुदिवारात्रौअविछेदंतुसंततेः दानमंत्रः ए
वंदत्वातुतद्दानंप्रणिपत्यविसर्जयेत् इतिवंध्यात्वहरसु
वर्णधेनुदानविधिः अथयोनिकंदस्यसनिदानंचिकित्सि
तमाह रुग्विनिश्चयात् दिवास्वप्नादतिक्रोधाद्व्यायाया
मादतिमैथुनात् क्षताच्चनखदंताद्यैर्वाद्याःवाद्याकुपितायदा
पूयशोणितसंपृक्तंलंबुकाकृतिसंनिभं उत्पद्यतेतथायो
नौनाम्नाकंदस्तुयोनिजः मधुकंशाकबीजंचस्कुरस्यासु
रदारुच अश्मंतकःकृष्णातिलास्ताम्रवल्लीशतावरी वृ
क्षादिनीवयस्थाचतथैवोत्पलशारिवा अनंतासारि
वाकृष्णापद्मामधुकमेवच बृहतीद्वयकाश्मर्यःभृंगक्षीर
त्वचोघृतं पृथक्पर्णीविदाशिग्रुःस्वदंष्ट्रामधुयष्टिका भृं
गाटकंवृषंद्राक्षाकसेरुमधुकंसिता वत्सैतेसप्तयोगाः
स्युःअर्द्धश्लोकसमापनाः यथाक्रमंप्रयोक्तव्यागर्भस्रा
वेपयोयुताः सक्षीराविहिताश्शुंठीमधुकंदेवदारुच एवम
प्यायतेगर्भस्तीव्रारुक्चोपशाम्यति समधुछागदुग्धेन

कुलालंकरमर्द्दकः अवश्यंस्थापयेद्गर्भंचलितंपातयोग
तः कुशकाशोरुवूकाणांमूलंगोक्षुरकस्यच श्रितंदुग्धं
सितायुक्तंगर्भिण्याःशूलनुत्परं कसेरुश्रृंगाटकजीवनी
यपलोत्पलैरंडशतावरीभिः सिद्धंपयःशर्करयाविमि
श्रंसंस्थापयेद्गर्भंविदीर्णशूलं कसेरुश्रृंगाटकपद्मको
त्पलंसमुद्गपर्णीमधुकंसशर्करं सशूलगर्भस्रुतिपीडि
तांगनापयोविमिश्रंपयसान्नभुक्पिवेत् पाठासुरस
सिंहास्यमयूरमुकुटैःपृथक् नाभिवस्तिभगालेपात्
सुखंनारीप्रसूयते परूषकशिफालेपस्थिरामूलकृ
तोथवा नाभिवस्तिभगाद्येषुमूढगर्भापकर्षकः मातु
लुंगस्यमूलानिमधुकंमधुसंयुतं घृतेनसहदातव्यंसु
खंनारीप्रसूयते पंचमूलस्यवाक्वाथंतप्तलोहेनसंगतं
सूतिकारोगनाशायपिवेद्वातुहितांकरां पिप्पलीपिप्प
लीमूलंचशुंठीयवानिका जीरकेद्वेहरिद्रेद्वेविडंसो
वर्चलंतथा एतैरेवौषधैःपिष्टैःआरनालंविपाचयेत् आ
मवातहरंवृष्यंकफघ्नंवन्हिदीपनं कांजिकंवज्रकंना
मस्त्रीणांबलविवर्द्धनं मक्कल्लशूलशमनंपरंक्षीराभि
वर्द्धनं वज्रकांजिकंशोथंस्तनोत्थितमवेक्ष्यभिषग्वि
दध्यात्यद्विद्विधावभिहितंबहुधाविधानंआमेविदह्य
तितथैवगतंचपाकं तस्यास्तनोसततमेवहिनिग्रहीं
ति विशालामूललेपस्तुहंतिपीडांस्तनोत्थितां इति

वीरसिंहावलोकेस्त्रीरोगाधिकारः अथज्योतिःशास्त्रा
भिप्रायेणबालकस्यरोगहेतुमाह तत्प्रतीकारंच स्वोच्चे
स्वकीयभवनेक्षितिपालतुल्योलग्नेऽर्कजेभवतिदेशन-
राधिनाथः शेषेषुदुःखगदपीडितएववाल्येदारिद्रकाम
वशगोमलिनोलसश्च अपरंच पीडितहृदयोहिबुके
निर्वाहनबांधवार्थमतिसौख्यः वालेव्याधितदेहोनरवरो
मधरोभवेत्सौरिः अन्यच्च असुखान्वितोदरिद्रोरोगाभि
पीडितोप्राज्ञः जननीरहितोतिमृदुर्विशिष्टनिरतःसदातु
रश्चापि स्वोच्चस्वांशवर्जंशनौचतुर्थस्थानेवा कर्कटरा
शौवावर्त्तमानेशनौवाल्येरोगबाहुल्योपशमायशनिप्रीत
येप्रागुक्तंजपहोमादिकंकुर्यात् तल्लिंगोपदर्शनात् तत्का
लीनग्रहदशाविचारणीया अथकर्मविपाकप्रकारेणबा
लानांरोगोपशांतिमाह गर्भस्थोनिषिद्धाहारेक्रियमाणे
निषिद्धाचारेणअशुभकर्मणांजन्मांतरेजन्मप्रभृत्यशौचो
रोगीजायते आतुरनुपचारकारीआशुत्रिदोषजातरोगी
जायते एतच्चरकादिशास्त्रेभिहितं अस्यप्रायश्चित्तं
कृच्छ्रातिकृच्छ्रचांद्रायणंकुर्यात् सर्वरोगोपशांतिव्याहृ
तिहोमंच अन्नदानाच्च ब्रह्मांडपुराणेविहितं ताड
नतर्जनहास्यभयाद्यानिजजननीप्राकृतहितभावात्
स्कंदसुखः अथ मावलिहेतोः शिशुकममंगलमाशुविशंति
स्तब्धविलोचनशोणितगंधःकुटिलमुखाल्परवोलुलिता

क्षः भून्यपराङ्मुखगाढविमुष्टिश्चकितमनाःशिशुरा
कुलितस्तैः तत्रपताकविलक्षनघंटकुटस्थ्यहमिहककुठ
दीपबलिःस्यात् अथक्रमप्राप्तस्यसनिदानंचिकित्सि
तमाह रुग्विनिश्चयात् त्रिविधःकथितोबालःक्षीरा
न्नोभयवर्द्धनः स्वास्थ्यंताभ्यांमदुष्टाभ्यांदुष्टानांरोग
संभवः धात्र्यास्तुश्लेष्मलैर्भुक्तैःश्लेष्मरुक्जायतेसुतः
वातलैःपित्तलैस्तद्वत्समधातुहिताशनं अथवृंदसंग्रहा
त् कुष्टंवचाभयाब्राह्मीकनकंक्षौद्रसर्पिषावर्णायुः
कांतिजननंलेहंबालस्यदापयेत् स्तन्याभावेपयश्छा
गंगव्यंवातद्गुणंपिबेत् मृत्पिंडेनाग्नितप्तेनक्षीरासिक्ते
नसोष्मणा स्वेदयेदुत्थितांनाभिंशोथस्तेनोपशाम्य
ति नाभिपाकेनिशालोध्रप्रियंगुमधुकैःसृतं तैलमभ्यं
जनेशस्तमेभिर्वाप्यवचूर्णितं हरिद्राद्वययष्ट्याव्हसिं
हीशक्रयवैःकृतं शिशोर्ज्वरातिसारघ्नंकासश्वासवमी
हरं धातुकीबिल्वधान्याकंलोध्रेंद्रयवबालकैः लेहः
क्षौद्रेणबालानांज्वरातीसारवांतिहृत् रजनीदारुस
रलश्रेयसीवृहतीद्वयं पृश्निपर्णीशताह्वाचलीढंमा
क्षिकसर्पिषा ग्रहणीदीपनंहंतिमारुतार्तिसकामलं
ज्वरातीसारपांडुघ्नंबालानांसर्वरोगनुत् मिशिकृष्णां
जनैर्लाजाश्रृंगीमरिचमाक्षिकैः लेहःशिशोर्विधात
व्यःछर्द्दिकासज्वरापहः श्रृंगीसकृष्णातिविषांविचू-

र्यलेहंविदध्या न्मधुनाशिभूनां कासज्वरच्छर्दिभि
रर्दितानांसमाक्षिकांचातिविषामथैषां द्विवार्ताकीफल
रसंपंचकोलंचलेहयेत् एतद्विश्राणिघ्याणिवातपित्त
कफज्वरे बिल्वंचपुष्पाणिचधातुकीनांजलंसलोध्रं
गजपिप्पलीच क्वाथावलेहौमधुनाविमिश्रौबालेषु
योज्यावतिसारितेषु समंगाधातुकीलोध्रसारिवाभिः
सृतंजलं दुर्द्धरेपिशिशोर्देयमतीसारेसमाक्षिकं ना
गरातिविषामुस्तावालकेंद्रयवैःसृतं कुमारंपाययेत्प्रा
तःसर्वातीसारनाशनं समंगाचमोचरसंधातुकीपद्म
केसरं पिष्टैरेतैर्यवागूस्याद्रक्तातीसारनाशनी क-
ल्कःप्रियंगुकोलास्थिमज्जमुस्तरसांजनैः क्षौद्रालीढःकु
मारस्यछर्दितृष्णातिसारनुत् लेहस्तैलसिताक्षौद्रतिल
यष्ट्याह्वकल्कितः बालस्यरुध्यान्नियतंरक्तश्रावप्रवा
हिकां लाजासयष्टीमधुकंशर्कराक्षौद्रमेवच तंदुलोद
कसंयुक्तंक्षिप्रंहंतिप्रवाहिका हरीतकीवचाकुष्टकल्कं
माक्षिकसंयुतं पीत्वाकुमारस्तन्येनमुच्यतेतालुकंटका
त् गृहधूमनिशाकुष्टराजिकेंद्रयवैःशिशोः लेपस्तक्रे
णहंत्याशुसिध्मपामाविचर्चिकाः पंचमूलीकषायेणसघृ
तेनपयःसृतं सश्रृंगवेरंसगुडंशीतंहिक्कार्दितःपिबेत्
द्राक्षयासाभयाकृष्णाचूर्णसक्षौद्रसर्पिषा लीढंश्वासं
निहंत्याशुकासंवमनकंतथा पुष्करातिविषाश्रृंगीमा

गधीधन्वयासकैः चूर्णतुमधुनालीढंशिभूनांपंचका
सजित् भेषजंपूर्वमुद्दिष्टंमहतांचज्वरादिषुकार्यंगदेषु-
मलानांतेषुदाहादिकंविना तएवदोषादूष्याश्चज्वरा
द्याव्याधयश्चते शस्तंतदेवभैषज्यंमात्रातस्यकनीयसी
सहामुंद्दिनीकोदीच्यक्काथस्ताहंज्वरापहं सप्तच्छदामनि
शाचंदनैश्चानुलेपनैः सर्पत्वकूलशुनंमूर्वासर्षपारि
ष्टपल्लवाः विडालविडजालोममेषशृंगीवचामधु धूपः
शिशोर्ज्वरघ्नोयमशेषग्रहनाशनः क्षणादुद्विजतेवालः
क्षणाद्दसतिरोदति नखैर्दंतैर्धारयतिधात्रीमात्मानमे
व ऊर्द्धंनिरीक्षतेदंतान्खादेत्कूजतिजृंभते भ्रुवौ
क्षिपतिदंतौष्टंफेनंवमतिचासकृत् क्षमोतिनिशिजा
गर्तिशूलांगोभिन्नविट्स्वरं मत्स्यशोणितगंधश्चनचा
श्चातियथापुरा सामान्यग्रहदुष्टानांलक्षणंसमुदाहृ
तं वचाकुष्टंतथाब्राह्मीसिद्धार्थकमथापिवा सारि
वासैंधवंचैवपिप्पलीघृतमष्टकं मध्यंघृतमिदंसिद्धंपा
तव्यंचार्दिनेदिने दृढस्मृतिःक्षिप्रमेधाकुमारोबुद्धिमान्भ
वेत् नपिशाचानरक्षांसिनभूतानिनमातरः प्रबदंति
कुमाराणांपिवतामष्टमंगलं अष्टमंगलं पादक
ल्कैःस्वगंधायाक्षीरमष्टगुणंपिबेत् घृतंदेयंकुमारा
णांपुष्टिकृद्वलवर्द्धनं अश्वगंधाघृतं लाक्षारससमं
सिद्धतैलंमस्तुचतुर्गुणं रास्नांचंदनकुष्टंचवाजिगंधा

निशायुतैः शताह्वादारुयष्ट्याह्वमुक्तातिक्ताह्वरेणुभिः बालानांज्वररक्षोघ्नमभ्यंगाद्बलवर्द्धनं इतिलाक्षादि कंतैलं इतिवीरसिंहावलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदो क्तप्रयोगेबालरोगचिकित्साधिकारः अथविषोपद्र वहेतुमाह तत्प्रतीकारंच यथोक्तंजातके व्यालवि षशस्त्रबंधनसुतीक्ष्णकूटैश्चधननाशः भौमदशायां लभतेनृपाग्निचौराहवादरिमर्द्दनात् अन्यच्च भानु दशायांलभतेनद्यौषधाध्वविषकाननैर्निधनं गिरि दंतचर्मवह्निक्रौर्यनरेंद्राहवाद्येश्च अथमंगलदशा जनितविषाद्युपशमायमंगलप्रीतयेसकलमपिविधानं विधिवत्कुर्यात् तथाचादित्यदशायामपिविषाद्युपद्र वेआदित्यप्रीतयेपूर्वोक्तमेवसकलंकुर्यात् तदुपद्रवोप शांतिः अथकर्मविपाकेहेतुमाह तत्प्रतीकारंच अथ विषेणयः पराहितमाचरतिसर्पादिनापरंभीषयतिस सर्पादिविषोपप्लुतोभवति तत्रापामार्जनस्तोत्रजपं कुर्यात्सर्वोपप्लवेच सौवर्णनागंपंचदश्यांदद्यात्स पैर्मंत्रैरग्नौजुहुयात् सहस्रनामस्तोत्रजपंकुर्यात् लू तादिविषोपप्लवेपिअपामार्जनस्तोत्रेणचसर्वाण्यंगा निसमलाग्रैःकुशैर्मार्जयेत्तेनोपशाम्यति अथक्रम प्राप्तस्यविषरोगस्यसनिदानंचिकित्सितमाह रुग्वि नेश्चयात् स्थावरंजंगमंचैवद्विविधंविषमुच्यते मू

लाद्यासिकमाद्यंस्यात्पुपरंसर्पादिसंभवं निद्रातंद्राक्लु मंदाहमपाकंलोहमर्षणं शोथंचैवातिसारंचकुरुतेजं गमंविषं इंगितज्ञोमनुष्याणांवाक्चेष्टासुखवैकृतैः जानीयाद्विषदातारमेभिर्लिंगैश्चबुद्धिमान् उद्वेष्टनं मूलविषैःप्रलापोमोहएवच जृंभणंवेपनंश्वासोज्ञेयान्य त्रविशेणतु मुखशोफःफलविषेदाहोन्नद्वेषएवच भ वेत्पुष्प विषेछर्दिराध्मानश्वासएवच त्वक्सारनि र्यासविषेरुपयुक्तेर्भवंतिहि आस्यदौर्गंध्यपारुष्यशि रोरुक्कफसंस्रवाः फेनागमःक्षीरविषेविड्भेदोगुरुजिव्हता हृत्पी डनंधातुविषैर्मूर्छादाहश्चतालुनि प्रायेणप्राणघातीनि विषाण्येतानिनिर्दिशेत् सद्यःक्षतंपच्यतेयस्यजंतोः श्रवेद्रक्तंपूयरूपंत्वभीक्ष्णं कृष्णीभूतंकृत्स्नमप्यर्थपू तिक्षतान्मांसंसीर्यतेयस्यचापि तृष्णामूर्छाज्वरदाहौ चयस्यदिग्धाहतंतंमनुष्यंव्यवश्येत् लिंगान्येतान्ये वकुर्यादमित्रैर्व्रणोर्विषंयस्यदत्तंप्रमादात्वातपित्तकफा त्सानोभोगिमंडलराजिलाः यथाक्रमंसमाख्याता द्यं तराद्वंद्वरूपिणः अश्वत्थदेवायतनस्मशानवल्मीक- संध्यासुचतुष्पथेषु याम्येचदष्टाःपरिवर्जनीयाऋक्षे शिरामर्मसुयेचदष्टाः दार्वीकिणाच्चविषमाशुहंतिसर्वा णिचोक्तानियथाक्रमेण वृंदसंग्रहात् मूलंतंदुल वारिणापिबतियःप्रत्यंगिरासंभवंनिष्पिष्टंशुचिभद्रयो

गदिवसेतस्याहिभीतिःकुतः दर्पादेवफणीयदादशति तंमोहान्वितामूलपं स्थानेतत्रतदेवयातिनियतंवक्रंय मस्याचिरात् मसूरंनिंबपत्राभ्यांखादेन्मेषगतेरवौ अब्दमेकंनभीतिःस्याद्विषार्तस्यनसंशयः शिरीषपुष्पस्य रसेसप्ताहंमरिचंभावितं भावितंसर्पदंष्ट्राणांपाननस्यांजनेहितं दंशस्योपरिबध्नीयात्तक्षणाच्चतुरंगुले क्षौमादिभिर्वेणिकयासिद्धैर्मंत्रैश्चमंत्रवित् अंबुवत्सेतुबंधेनबंधेनस्तंभ्यतेविषं नवहंतिशिराश्चास्यसमंसंधिगताअपि नजायतेविषाद्वेगोवीजनाशादिवांकुरः सतमालंब्यदृष्टव्यत्नक्षणेंदुरगोरिपुः कोमलंवायदन्यश्चयेयंशीतंघृतंगव्यंवाच्यंवानीलकंग्रहं ध्येयावागरुडातनुः शून्यतःध्यानमात्रेणशून्यतांयातितद्विषं नक्तमालफलव्योषबिल्वमूलनिशाद्वयं सौरसंपुष्पमाजवामूत्रंवोधनमंजनं वंध्याककोंटकंमूलंछागमूत्रेण भावितं नस्यंकांजिकसंपिष्टंविषोपहतचेतसः त्रिवृद्विशालेमधुकंहरिद्रेमंजिष्टचक्रेलवणंचसर्वं कटुत्रिकंचैवविचूर्णितानिभृंगेनिदध्यान्मधुसंयुतानि एषोगदोहंत्युपयुज्यमानःपातांजनाभ्यंजननस्ययोगैः अवार्यवीर्योविषवेगहंतामहागदोनाममहाप्रभावः आगारधूममंजिष्टारजनीलवणोत्तमैः लेपोजयत्याशुविषंकर्णिकायाश्चपानतः यःकासमर्देनेत्रवदनेनिक्षिप्य

फूत्कारंमनुष्योद्ददातिशीघ्रंजयतिविषंवृश्चिकानांसः
पारावतशकृत्शुंठीमातुलिंगरसैःसमैः पथ्याकर्पासस-
मिश्रैर्वृश्चिकस्यविषंजयेत् कुठेरकस्यबीजंतुक्षीरेणा-
र्कस्यभावितं लेपमात्रेविषंहंतिवृश्चिकस्यनसंशयः र
जनीसैंधवसंयुक्तंघृतमुत्तमपानतः मूलाविषार्तस्यदि-
ग्धवृक्षस्यचेष्यते चतुष्पाद्भिर्द्विपदैर्वानरवदंततंतुयत् श्वय
तेपच्यतेरागरुजास्रावज्वरान्वितं सोमवल्कोश्वकर्ण
श्वगोजिव्हाहंसपाद्यपि रजन्यौगैरिकंलेपोनरवदंतविषा
पहः वचाहिंगुविडंगानिसैंधवंगजपिप्पली पाठाचातिवि
षाव्योषंकाश्यपेनविनिर्मितं दशांगमगदंपीत्वासर्वकीट
विषंजयेत् कीटदष्टाक्रियाःसर्वाःशमनास्युर्जलौकसः
छत्रीझर्झरपाणिश्चवरेंद्रावोतथादिवा तस्यायाःशब्द
विन्नस्याःप्रणश्यंतीहपन्नगाः सोत्कंपःपुलकावृतःप्रति
मुहुःवक्त्रंसमालोक्यते दंतेनाधरपल्लवंदशतिचेच्छी-
त्कान्वितंकूजति यस्तापंजडतांचयातिनितरांदष्टःसउ
त्कंठितोरंतुंत्वास्थिमितामलांवरवतीद्रांशमसानस्थली
श्लेष्माणःकफपूर्णस्यवामानामिकयाकृतः लेपोहन्या
द्विषंघोरंनृमूत्रसेवनंतथा पिंडीतगरकंनेत्रंपुष्पेणो
त्साद्ययोजितंदंशे मृतमापिदष्टंपुरुषंचालयतिनात्रचि
त्रं विरुद्धाध्यसनक्रोधक्षुद्भयासनमैथुनंवर्जयेद्विष
मुक्तोपिदिवास्वप्नंविशेषतः इतिश्रीवीरसिंहावलोके

ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगोविषाधिका
रः अथाकालपलितस्यजातकाभिप्रायेणहेतुमाह न
प्रतीकारंच यथोक्तंजातके दोषैर्विविधैःख्यातंदिनकर
दिष्टोत्तरंप्रमाणस्थं सौरेणदृष्टमूर्त्तिर्वलीयुतांगतिरस्कृतं
नीचं चंद्रःकरोतीतिशेषः शनिचंद्रप्रीतयेयथोक्तमेव
जपहोमादिकंकुर्यात् मकरांशस्थेभौमेप्येवं आश्रय-
शौचविहीनोवृद्धाकारइतिवचनात् अथाकालपलित
स्यकर्मविपाकेहेतुमाह स्वकर्मनिर्दृशकोजन्मांतेयुवैव
शुक्लकेशोभवति सगायत्र्ययुतंजपेत् तनूयाग्नेइममं
त्रंजपेत् तिलैराज्येनजुहुयात् स्वकृतंस्कृतंनकीर्त
येत् स्वर्णमन्नमाज्यंदद्यात् इत्यकालपलितस्यप्रती
काराधिकारः ज्वरादिविषांतानांरोगाणांक्रमेणज्योतिः
शास्त्रकर्मविपाकायुर्वेदोक्तमार्गेणाचिकित्सितमुक्त्वार
सायनाधिकारमाह वृंदसंग्रहात् यज्जराव्याधि-
विध्वंसिभेषजंतद्रसायनं पूर्वेवयसिमध्येवाशुद्धकायः
समाचरेत् अविशुद्धशरीरस्ययुक्तोरासायनोविधिः
नभातिवाससिक्लिष्टेरंगयोगइवार्पितः सिंधूत्थशर्क
राशुंठीकणामधुगुडैःक्रमात् वर्षादिष्वभयाभ्यासात्
रसायनगुणैषिणा त्रैफलेनायसींपात्रींकल्केनालेपये
न्नवां तमहोरात्रिकंलेपंपिबेत्क्षौद्रोदकाप्लुतं प्रभूत-
स्नेहशमनंजीर्णेतास्मिन्प्रयोजयेत् अजरोरुक्समभ्या

साज्जीवेन्नासससमाशतं मंडूकपर्ण्याःस्वरसःप्रयोज्यः क्षीरेणयष्टीमधुकस्यचूर्णं रसोगुडूच्यास्तुसमूलपुष्प्या कल्कःप्रयोज्यःखलुशंखपुष्प्याः. आयुःप्रदान्यामयना शनानिबलाग्निवर्णस्वरवर्द्धनानि मेध्यानिचैतानिरसा यनानिमेध्याविशेषेणतुशंखपुष्पी योमासमेकंस्वरसं पिबंतिदिनेदिनेभृंगरजःसमुत्थं क्षीराशिनस्तेबलवर्ण युक्ताःसमाःशतंजीवितमाप्नुवंति असिततिलविमिश्रा न्पल्लवान्भक्षयेद्यस्ततस्कृपयआशीभृंगराजस्यमा भ वतिचचिरजीवीव्याधिभिर्विप्रमुक्तोभ्रमरसदृशकेशः कामचारीमनुष्यः पीताश्वगंधापयसार्द्धमासंघृतेनतै लेनसुखांबुनावा कृशस्यपुष्टिंवपुषोविभर्तिबालस्य सस्यस्ययथांबुवृष्टिः धात्रीतिलान्भृंगरसोविमिश्रा न्येभक्षयेयुर्मनुजाःक्रमेण तेकृष्णकेशाविमलेंद्रि याश्चनिर्व्याधयोप्यामरणाद्भवेयुः मासंवचामप्युप सेव्यमानःक्षीरेणतैलेनघृतेनवापि भवंतिरक्षोभि रदृष्टरूपामेधाविनोनिर्मलदृष्टिवाचः वृद्धदारुक मूलानिसूक्ष्मचूर्णानिकारयेत् शतावर्यारसेनैवस प्तवारांश्चभावयेत् अक्षमात्रंतुतत्चूर्णंसर्पिषास हयोजयेत् मासमात्रोपयोगेनमतिमान्जायतेन रः मेधावीस्मृतिमांश्चैववलीपलितवर्जितः हस्तिक र्णरजःखादेत्प्रातरुत्थायसर्पिषा यःश्रेष्टाहारत्वा

रोपिसहस्रायुर्भवेन्नरः मेधावीबलवान्कामीस्त्री
शतानिजयत्यसौ मधुनात्वस्यस्त्रेहःस्यात्बलिष्टः-
स्त्रीसहस्रगः अयंमंत्रःप्रयोक्तव्योभिषजावभिमंत्रणे
ॐनमोमहाविनायकायअमृतंरक्षरक्षमेफलसिद्धिंदे
हिदेहिरुद्रवचनेनस्वाहा पुनर्नवस्यार्द्धपलन्नवस्य-
पिष्टंपिवेद्यःपयसार्द्धमासं मासद्वयंतद्विगुणंसमंवाजी
र्णोपिभूयोसपुनर्नवःस्यात् धात्रीचूर्णस्यकंसंस्वरस
परिभितंक्षौद्रसर्पिःसमांसं कृष्णामानीसिताष्टप्रसृति
मधुयुतंस्थापितंभस्मराशौ वर्षान्तेतत्समश्नन्भवति
विपलितोरूपवर्णप्रभावैः निर्व्याधिर्बुद्धिमेधास्मृति
वचनबलस्थैर्यसत्वैरुपेतः गुडूच्यपामार्गविडंगशंखि
नीवचाभयाशुंठिशतावरीसमा घृतेनलीढाप्रकरो
तिमानवंत्रिभिर्दिनैःश्लोकसहस्रधारिणं ब्राह्मीवचा
मथोवासपिप्पलीमधुसैंधवं अस्यप्रयोगात्सप्ताहा
त्रुकिंनरैःसहगायति हंत्यम्लपित्तवमनारुचिदाह-
मोहान्खालित्यमोहतिमिरव्रणभुक्तदोषान् भुक्त्वारसः
सततमामलकीरसेनवृद्धोप्यनेनचभवेत्तरुणीरिरंसुः
तीव्रेणकुष्टेनपरीतदेहोयःसोमराजींनियमेनखादेत्
संवत्सरंकृष्णातिलद्वितीयांससोमराजींवपुषाधिशेते
पंचभल्लातकंछित्वासाधयेद्विधिवज्जले कषायंतं-
पिवेच्छीतंघृतेनाक्तोष्टतालुकः पंचभल्लातकंयावत्सप्त

तिन्हासयेनततः जीर्णेद्यादोदनंशीतंघृतक्षीरोपसंहतं एतद्रसायनंश्रेष्ठंवलीपलितनाशनं कुष्ठार्शोकृमिदोषघ्नं दुष्टशुक्रविनाशनं तैलंभल्लातकानांचापिवेन्मासंयथा-बलं सर्वोपतापनिर्मुक्तोजीवेद्वर्षशतंदृढः कासश्वासाति सारज्वरपित्तकफटीकुष्ठकोष्ठप्रकारान् मूत्राघातोदरार्शः श्वयथुगलशिरःकर्णशंखाक्षिरोगान् येचान्येवातपित्त श्रमजकफभवाव्याधयःसंतिकेचित्तांस्तानभ्यासयोगा द्पनयतिपयःपीतमन्तेनिशायाः अंभसःप्रसृतीरष्टौ रवावनुदिते पिवेत् वातपित्तकफंजित्वाजीवेद्वर्षश तंदृढं अंगवलीपलितघ्नंपीनसवैश्वर्यकासश्वासघ्नं रजनीक्षयेंबुनस्यंरसायनंदृष्टिजननंच प्रसृतित्रयंतु पातव्यंनासायानाधिकंमतं नकेवलंदीर्घमिहायुरश्नु तेरसायनंयोविधिवन्निसेवत् गतिंसदेवर्षिनिषेवितां शुभांप्रपद्यतेब्रह्मतथैवचाक्षयं इतिश्रीवीरसिंहा वलोकेज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगोरसा यनाधिकारः अथज्योतिःशास्त्राभिप्रायेणषंडत्व हेतुमाह तत्प्रतीकारंच यथोक्तंजातके क्लीवाचारो हृष्यःसर्वजितोबंधुभिस्त्यक्तः सौरादित्यंदुसुतैःएक-स्थैर्जायतेपुरुषः अन्यच्च सोनीचंरविभवनेदुःखांत विक्षितांगमस्फुरूपं अनुचरशीलमकांतंनपुंसकंभौम संदृष्टः तथाच क्लीवोविपिन्नदुष्टःपरार्थचेष्टःसुदुः

खितोमूढः मकरेदानवपूज्येक्लैशसहोजायतेपुरुषः अथशनिरविबुधयोगेषंडत्वंसंभवेत् तत्प्रतीकारार्थंग्र हत्रयप्रीतयेयथोक्तमेवपूर्ववत्कुर्यात् रविग्रहस्थितभौ मदृष्टबुधजनितनपुंसकत्वप्रतीकारायबुधप्रीतयेयथो क्तमेवकुर्यात् मकरांशवर्तमानशुक्रजनितनपुंसकत्व प्रतीकारायशुक्रप्रीतयेयथोक्तमेवकुर्यात् तेनोपशांति र्भवति नपुंसकत्वकर्मविपाकहेतुमाह तत्प्रतीकारंच स्त्रीपण्योपजीवीषंडः कौमारदारत्यागीनहूतमाता पित्रोराक्रोशकःषंडः चांडाल्यवकीर्णीषंडः कन्यादूष कषंडः अंगुल्यादियोनिविदारणेनतुसंभोगेषंडःस्या त् अस्यप्रायश्चित्तं उक्तमेवकुर्यात् तत्पापोपशां तयेचांद्रायणद्वयंकुर्यात् गांसुवर्णंचदद्यात् रसायन मुक्त्वावाजीकरणमाह वृंदसंग्रहात् तैस्तैर्भावैरहृद्यै स्तुरिरंसोर्मनसिक्षये ध्वजःपतत्यतोनृणांक्लैव्यंसमुप जायते अन्यैरम्लोष्णलवणैरतिमात्रोपसेवितैः सौ म्यधातुक्षयोदृष्टःक्लैव्यंतदपरंस्मृतं अतिव्यवायशीलो योनचवाजिक्रियारतः ध्वजभंगमवाप्नोतिसशुक्रक्षय हेतुकं असाध्यंसहजंक्लैव्यंमर्मछेदाच्चयद्भवेत् साध्या नामविशिष्टानांकार्योवाजीकरोविधिः पिप्पलीलवणो पेतौवस्तांडौक्षीरसर्पिषा साधितौभक्षयेद्यस्तुसगच्छे त्प्रमदाशतं वस्तांडसिद्धेपयसिभावितानसकृत्तिलान्

यःखादेत्सपुमान्गच्छेत्स्त्रीणांशतमपूर्ववत् चूर्णंवि-
दार्याःस्कृतंस्वरसेनैवभावितं सर्पिःक्षीरयुतंलीढ्वा
दशगच्छेन्नरोंगनाः एवमामलकंचूर्णंस्वरसेनैवभावि
तं शर्करामधुसर्पिर्भिर्युक्तंलीढ्वापयःपिवेत् एतेना
शीतिवर्षोपियुवेवपरिहृष्यति विदारीकंदचूर्णंतुघृते
नपयसानरः उदुंबरसमंखादेत्वृद्धोपितरुणायते
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णंसशर्करं धारोष्णेननरःपी
त्वापयसानक्षयंव्रजेत् उच्चटाचूर्णमप्येवंक्षीरेणो-
त्तममुच्यते शतावर्युच्चटाचूर्णंपेयमेवंस्करखार्थिना
कर्षंमधूकचूर्णस्यघृतक्षौद्रसमन्वितं पयोनुपानं
योलिह्यान्नित्यवेगःसनाभवेत् गोक्षुरकःक्षुरकः
शतमूलीवानरिनागवलातिवलाच चूर्णमिदंपयसा
निशिपेयंयस्यगृहेप्रमदाशतमस्ति त्रिकटुविदारी
निस्तुषतिलवहुपत्रीरजश्चतुःप्रस्थं भल्लातकंप्रस्थयु
गंतत्समःसत्वंगुडूच्याश्च पंचत्रिंशन्मधुयुतोव्योम्न
श्चाष्टौपलानिदशवन्हेः तद्विगुणावाराहीसप्तगुणाश
र्करादहनात् मध्वर्द्धंघृतंचैतत्परिमृज्यस्निग्धभाज
नेनिहितं अद्यादाद्यथाग्निहंतुरोगानीकंक्षयंकासं अ
श्मर्युदरभगंदरकुष्टवलीपीनसश्वासं नरसिंघसदृश
विक्रममन्यमपिवांछितंलभवेत् बलवर्णकांतिस्वर
स्मृत्युत्साहसंयुक्तं उपयुज्यचूर्णमब्दंशुद्धतनुःस्या

नृसिंहाख्यं वाराहमूर्द्धवृत्कंदोवाराहीकंदसंज्ञि-
तः भिषज्ञानदलाभेतुचर्मकारालुकोमतः नारसिं
हाख्यंचूर्णं घृतंशतावरीगर्भक्षीरेदशगुणेपचेत्
शर्करापिप्पलीक्षौद्रयुक्तंवृष्यमुच्यते शतावरीघृ
तं कर्पूरागरुचोचवोलनलिकालाक्षासठीधातुकी
पुष्पैःसूक्ष्मदलैलवालुकरसाशैलेयमांसीपूर्वैः एला
कुंकुमरोचनादमनकश्रीवासजातीफलैः कंकोलक्रमु
कैर्जटामदमुराकांतालवंगामयैः तैलोशीरहरेणुकाम
लयजस्थौणेयचंडानखैर्जातीकुष्टकुलीरपद्मकनतैः
सूक्ष्मान्वितैःपालिकैः लाक्षायोजनवल्लिलोध्रसलिलै
स्तैलंविपाच्यादकंतेनाभ्यज्यतनुर्जरन्नपिभवेत्स्त्री
णांपरंवल्लभः शुक्राढ्योद्युतिमाननल्पतनयःषंढो
पिरस्युत्सुकोवंध्यागर्भवतीभवेदपितथावृद्धोपिसंज्ञे
सुतं कंडस्वेदविचर्चिकामलहरंदौर्गंध्यकुष्टापहं अ
श्विभ्यांपरिकीर्तितसुखकरंतैलंसुगंधमहत् इतिमहासुगं
धतैलं यःकश्चिन्मधुरंस्निग्धंबृंहणंजीवनंगुरु
हर्षणंमनसश्चैवसर्वंतद्वृष्यमुच्यते स्वरूपायौवनाव
स्थालक्षणैर्याविभूषिता यावश्याशिक्षितायाचसा
स्त्रीवृष्यतमामता नर्तेवैषोडशाद्वर्षात्सप्तत्याःपर-
तोनच आयुःकामोनरःस्त्रीभिःसंयोगंगंतुमर्हसि
भोजनानिविचित्राणिपानानिविविधानिच वाचःश्रो

ऽनुगामिन्यस्त्वक्सुखस्पर्शनानिच गंधामनो-
ज्ञारूपाणिचित्राण्युपवनानिच मनसश्चाप्रतीघातोवा
जीकुर्वंतिमानवं इतिवीरसिंहावलोकेवाजीकरणाधि
कारः अथस्नेहाधिकारः वृंदसंग्रहात् यथादोषंय
थाव्याधियथाकालंयथाबलं स्नेहंपक्कमपक्वंवापातुं
युंज्यात्चिकित्सकः केवलंपैत्तिकेसर्पिर्वातिकेलवणा
न्वितं देयंबहुकफेतैलंव्योषक्षारसमायुतं स्नेहसा-
त्म्यःक्लेशसहोदृढःकालेचशीतले अच्छमेवपिबेत्स्नेहम
हष्वानोहिशोभनं उत्तममस्यपलंमात्रात्रिभिश्चाक्षैश्च
मध्यमा जघन्यस्यपलार्द्धेनस्नेहक्काथौषधेषुच पिबेत्त्र्य
हंचतुरहंपंचाहंषडहानिच सप्तरात्रात्परंस्नेहःसात्म्य-
भावायकल्प्यते स्नेहंकृशंकृशान्वृद्धान्सुकुमारा
न्शिशूनपि तृष्णालुंचोष्णकालेचसहभक्तेनपाययेत्
त् पिप्पल्योलवणंस्नेहाश्चत्वारोदधिमस्तुकं पीतमे
कध्यमेतद्धिसद्यःस्नेहनमुच्यते विवर्जयेत्स्नेहपानम
जीर्णीतरुणज्वरीदुर्बलोरोचकोस्थूलोमूर्छार्तोमदपी
डितः छर्द्याभिभूतस्तृषितश्रांतःपानक्लमान्वितः
दत्तवस्तिर्विरिक्तश्चवांतोयश्चापिमानवः अकालेपि
प्रसूतास्त्रीस्नेहपानंविवर्जयेत् दीप्तांतराग्निःपरिशु
द्धकोष्टःप्रत्युग्रधातुर्बलवर्णयुक्तः दृढेंद्रियोमंदजरःश
तायुस्नेहोपसेवीभवतीहमर्त्यः इतिवीरसिंहावलोके

स्नेहाधिकारः अथस्वेदाधिकारआरभ्यते त
सैःसैकतपाणिकांस्यवसनैःस्वेदोथवद्धारकैः लेपाद्यै
तहरैःसहाम्ललवणैःस्नेहैःसुखोष्णैर्भवेत् एवंतत्सपयो
बुवातशमनःक्काथादिसेवादिभिः तसैस्तोयनिषेचनोद्गत
महद्बाष्पैःशिलाद्यैःक्रमात् येषांनस्यविधातव्यंवस्ति
श्चापिहिदेहिनां शोधनीयाश्चयेकेचित्पूर्वंस्वेद्याश्चतेम
ताः पश्चात्स्वेद्योत्हतोशल्लोमूढगर्भैरुपद्रुताः सम्यक्प्र
जानाकालेचपश्चात्स्वेद्यैश्चजानता स्नेहात्क्लिन्नाधा
तुसंस्थाश्चदोषाःस्वस्थायेचयेचमार्गेषुलीनाः सम्यक्-
स्वेदैर्योजितास्तेद्रवत्वंप्राप्ताकोष्टंशोधनैर्यांतिशेषाः अ
ग्नेर्दीप्तिमार्दवंत्वक्प्रसादंभक्तश्रद्धांश्रोतसांनिर्मलत्वं
कुर्यात्स्वेदोतंद्रानिद्रेचहन्यासंधीस्तब्धांश्चेष्टयेदाशुयु-
क्तः शीतशूलव्यपरमेस्तंभनिग्रहगौरवे संजातेमा
र्दवेरक्तेस्वेदनाद्विरतिर्मता पांडुमेहीरक्तपित्तीतृषार्तः
क्षतक्षीणोदुर्बलोजीर्णभुक्तः वृकोदरीगर्भिणीपान
कृच्छ्रनैतेस्वेद्यायश्चमर्त्योतिसारी स्नेहव्यक्तशरीरस्य
शीतैराच्छाद्यचक्षुषी हृदयंवृषणोदृष्टीस्वेदयेन्मृदुना
नवा इतिवीरसिंहावलोकेस्वेदाधिकारः वमनं-
रेचनंनस्यंनिरूहश्चानुवासनं ज्ञेयंपंचविधंकर्मविधा
नंतस्यकथ्यते दोषाःकदाचित्कुप्यंतिजितालंघनपा-
चनैः येतुसंशोधनैःशुद्धाःनतेषांपुनरुद्भवः यथाउ

कंथथायोगंकफजेवमनंशस्तंरेचनंपित्तजेगदे वस्ति
र्वातगदेकार्याआमजेपाचनादिकं स्निग्धंस्विन्नंनरंस
म्यकूजानुमात्रासनस्थितं कंठमेरंडनालेनस्पृशन्निर्वा
मयेद्भिषक् कृष्णेंद्रयवसिंधूत्थंरामठकल्कयुतंपिवेत्
यष्टीकषायंसक्षौद्रंतेनसाधुवमत्फलं आटरूषंबचा
निंबपटोलंफलिनीत्वचं क्राथयित्वापिवेत्तोयंवातिकृन्म
दनान्वितं फलंचकटुतीक्ष्णोष्णैःपित्तेस्वादुहितैर्वमेत्
रूक्षस्वादुलवणाम्लाम्लसंसृष्टंवायुनाकफे पित्तेकफस्था
नुरूक्षंप्रवृत्तेशुद्धेषुत्हृत्कंठसिरस्सुचापि लघ्वेचदाहे
कफसंस्रवेचास्थितेषुवांतंपुरुषंव्यपश्येत् कफःप्रसेकः
स्वरभेदनिद्रातंद्रास्यदौर्गंध्यविषोपसर्गाः गुरुत्वकंड्वग्र
हणंविकारंनश्यंतिजंतोर्वमनःक्रमेन छिन्नेतरोपुष्प
फलप्ररोहायथाविनाशंसहसाव्रजंति तथाहृतेश्लेष्म
णिछर्दनेनतज्जाविकाराविलयंव्रजंति नवामयेत्तिमि
रकंनगुल्मेनैवोदरेनैवचपांडुरोगे स्थूलक्षतक्षीणकृशा
तिवृद्धानर्शोर्दिताक्षेपकपीडितांश्च रूक्षप्रमेहेतिमि
रेचगर्भेगछत्यधोर्द्धरुधिरेचतीव्रे दुष्टेचकोष्टेकृमिभि
र्मनुष्यंनवामयेदर्शसिचातिवृद्धे अतिवांतंघृताभ्यक्त
मवगात्याहिमेजले उपचारेकृतात्क्षौद्रामिश्रैर्लेह्यैश्चिकि
त्सकः वमनेतिप्रवृत्तेचहृद्यंकार्यंविरेचनं इतिवमना
धिकारः स्निग्धस्विन्नायवांतायदातव्यंहिविरेचनं

अन्यथायोजनंपुंसांगृहिणीरोगकृन्मतं पित्तेनस्या-
न्मृदुःकोष्टेक्रूरोवातकफाश्रयात् मध्यमःसमदोषत्वा
न्मात्रायोज्यानुरूपतः शर्कराक्षौद्रसंयुक्तंतृवृच्चूर्णंसु
चूर्णितं रेचनंसुकुमाराणांत्वकूपत्रमरिचान्वितं अभ
यापिप्पलीमूलंमरीचंविश्वभेषजं त्वक्पत्रपिप्पलीमुस्त
विडंगामलकानिच एतानिसमभागानिदंतीच त्रिगुणा
भवेत् तृवृदष्टगुणाज्ञेयाषड्गुणाचात्रशर्करा मधुना-
मोदकंकृत्वावल्लमात्रप्रमाणतः एकैकंभक्षयेत्प्रातःशी
तंचानुजलंपिवेत् तावद्विरिच्यतेजंतुर्यावदुष्णंनसेव्य
ते पानाहारविहारेषुभवेन्नियंत्रणःसदा पांडुत्वकास
विषमज्वरवन्हिसादान्जंघोरुपृष्टजघनोदरपार्श्वभूला
न् प्लीहाक्षिरोगपवनाश्मरिकुष्टमेहान्हन्याद्रसायन
मिदंभिषजाप्रशस्तं अल्पव्ययंबहुफलंसततोपसेव्य
मायुष्करंपलितनाशनमभ्विहृष्टं इत्यभयाद्योमोद-
कः विडंगसारामलकाभयानांपलंपलंस्यात्तृवृतात्रयं
च गुडस्यचद्वादशभागयुक्तामासेनत्रिंशद्गुटिकानिसे
व्याः निवारिणोयक्षवरेणसृष्टः समाणिभद्रःकिलशा
क्यभिक्षवे अयंहिकासक्षयकुष्टनाशनोभगंदरप्लीह
जलोदरार्शसां बुद्धेःप्रसादंवलमिंद्रियाणांधातुस्थि
रत्वंज्वलनस्यदीप्तिं चिरान्नपाकंवयसःकरोतिविरेचनं
सम्यगुपास्यमानं माणिभद्रोमोदकः क्षीणास्तथा

रूक्षितबालवृद्धादीनोथशोषीभयशोकतप्तः श्रांतस्तृ
षार्त्तःपरिजीर्णभुक्तोगर्भिण्यधोगच्छतियस्यचासृक्
नवप्रतिश्यायपरीतदेहोनवज्वरीयाचनवप्रसूता श-
ल्यार्द्दिताश्चाप्यविरेचनीयाःस्नेहादिभिर्येत्वनुपसृता
श्च वप्रकोशीरनागाह्वचंदनानिप्रयोजयेत् अति
योगेविरेकस्यपानलेपनसेचनैः विरेचनानांसर्वेषांद
ध्यम्लंस्तंभनेहितं आमांतेचप्रदातव्यमन्यथासुक्
सूपकं इतिश्रीवीरसिंहावलोकेविरेकाधिकारः व-
स्तिर्वातेचापित्तेचकफेरक्तेचशस्यते संसर्गेसंनिपातेच
वस्तिरेवसदाहितः विरेचनात्सप्तरात्रेगतेजातकलक्षये
कृताहारायसायान्हेवस्तिर्देयानुवासतः उत्सृष्टानिल-
विण्मूत्रेनरेवृत्तिंनिधापयेत् अन्यथोपहितोवस्तिर्नैवां
तःसंप्रपद्यते एकांतरोपयोगेनधान्यशुंठीजलंपिवेत्
तेनास्यदीप्यतेवन्हिर्भक्तकांक्षाचजायते मधुकामग
धामयविल्ववचामिसिपुष्करमूलसटीशिखिभिः मदना
मरदारुयुतैर्विपचेत्सयसागुदवास्तिषुशूलमिदं गुदजा
निगुल्फगुदगुह्यकटीजठरांतरेषुपवनस्यरुजः विनि
हंतिगुल्ममतिसारगदान्ग्रहणीविकारमनुवासनतः
इतिवीरसिंहावलोकेनुवासनाधिकारः अनुवासित
मभ्यक्तंस्विन्नदेहंनिरूहयेत् अभुक्तेपीडयेद्वस्तिम
चूर्णमविलंवितुं स्नेहंगुडंमांसरसंपयश्चअम्लानिमू

ंमधुसैंधवश्च एतान्यनुक्तान्यपिपाययेत्तुनिरूहयोगे मदनात्फलंच गुडतिंतिडीककुडवस्तु भवेदपिचात्रमूत्र कुडवद्वितयाभिशिरामठशःकसिंधुयुतं निरूहणंहि विहितंमुनिभिः मूलसेकाद्यथावृक्षाःस्निग्धशाद्वल पल्लवाः तथावस्तिप्रदानात्स्युर्नराःकांतिबलान्विताः इतिश्रीवीरसिंहावलोकेनिरूहाधिकारः प्रायोगिकःका सहरश्चधूमोवैरेचनस्नेहनवामनीयो एलादिनाकुष्टन तोर्जितेनक्षौमंप्रलिप्यांगुलिकाष्टमानं प्रायोगिकेव र्तिरियंष्टीवेन्मुखमागतं तेनरोगाःप्रशाम्यंतिनराणा मूर्द्धजंतुषु इंद्रियाणांचवैमल्यंकुर्यादास्यंसुगंधिच हनुदंतशिरोग्रीवात्रिकबाहूरसाबलं वलीपलितखा लित्यव्यंगानांचाप्यसंभवः तैलंकफेचवातेचकेवलेप्र वनेवसां दद्यान्नस्यंसदापित्तेसर्पिर्मज्जचमारुते च तुर्विधस्यस्नेहस्यविधिरेषप्रदर्शितः श्लेष्मस्थानविरो धित्वात्तेषुतैलंप्रशस्यते विषाभिघातेसन्यासेमूर्छा मोहापतंत्रके मदापस्मारशोकार्तिचिंताक्रोधभयादि षु मानसेषुचरोगेषुमूढव्याकुलचेतसां संज्ञाप्रबोध हेत्वर्थमवपीडंचदापयेत् नस्येप्रधमनेचूर्णंत्रिबलंय त्कृतंपुटं षडंगुलद्विमुखयानाड्याविषादिमूर्छितः प्रसन्नदृष्टिर्दृढदंतकेशःशशांकवक्त्रःपलितैर्विहीनः पिका भकंठःकमलास्यगंधोनरयोपसेवीभवतीहमर्त्यः

इतिवीरसिंहावलोकेनस्याधिकारः सुखंसंचार्यतेया तुमात्रासाचावलेस्मृता असंचार्यातुयामात्रा गंडूषेसाप्र कीर्तिताः एवंस्नेहपयःक्षौद्रसमूत्राम्लससैंधवैः कषायो ष्णोदकाभ्यांचकवलोदीयतेहितः इतिश्रीवीरसिंहा वलोकेकवलाधिकारः अथमिश्रकः मुस्तापर्पट कंज्व रेतृषिजलंमृद्भृष्टलोष्टोद्भवंलाजाछर्दिषुवस्ति जेषुगिरिजोमेहेषुधात्रिनिशांपांडोश्रेष्टमथाभयानिल कफेप्लीहामयेपिप्पलीसंधानंकृमिजेविषेभुकतरुर्मे दस्यथोगुग्गुलुः वृषोस्त्रपित्तेकुटजोतिसारेभल्लात मर्शःस्रुगदेषुहेम स्थूलेषुतार्क्ष्यंचकिमौकृमिघ्नंशोषेसुराछाग पयोथमांसंअक्षामयेषुत्रिफलागुडूचीवातास्रुरोगेमथि तंग्रहण्यां कुष्टेषुसेव्यःखदिरस्यसारःसर्वेषुरोगेषुशि लाव्हयंच उन्मादंघृत मनवंमद्यंशोकंव्यपस्मृतिं ब्रा ह्मीनिद्रानाशंक्षीरंजयतिरसालाप्रतिश्यायं मांसंकार्श्यं लसुनःप्रभंजनंस्तब्धगात्रंनंस्वेदः गुडयजान्याश्चपुरो नस्यंस्कंधांसबाहुषुरुजः नवनीतखंडमार्दितमो षुंमूत्रंपयश्चहंत्युदरं नस्यंचोर्द्ध्वविकारान्विद्रधिम चिरोत्थमश्रावःनस्यं कवलं मुखगलगदनस्यांजना दिनेत्ररुजःधृष्टत्वंक्षीरघृतेमूर्छांशीतांबुमारुतछा- याः समसक्त्वार्द्धकमात्रामंदंवन्हौश्रमेसुरापानं दु खसहत्वंस्थौल्येव्यायामेगोक्षुरुहितःकृच्छ्रे कासेनि

दिग्धिकायाः क्काथः भूलिषुपुष्करंजत्सपयसासंस्थां
पनेच धात्रीत्रिफलायागुग्गुलुर्व्रणे शस्तः वस्तिर्वात
विकारेपित्तेरेकः कफोद्भवेवमनं क्षौद्रंजयतिवला
संवस्तिःपीतंसर्ष पतैलं इत्येतद्यथाप्रोक्तंरोगाणां
मौषधंकालंतद्देशकालवलतोविवेचनीयंयथायो
गंखदिरंनिंबपत्राणिमसूरविदलैः सह्रापेष्यंभसा
कृतोलेपःशीतपित्तंव्यपोहति पलंपलंसमादायसर्ज
निर्यासंसर्पिषोः तयोस्तुल्यंगुडंदत्वासम्यग्घृष्ट्वाप्रदिपे
षयेत् अर्कदुग्धपलार्द्धंतुक्षिप्त्वा लेपंप्रलेपयेत्
तेनेव लेपितौपादौभवतोब्जदलप्रभौ सर्जशिग्रुकसिं
धूत्थघृतगुग्गुलगैरिकैः गुडक्षौद्रयुतोलेपः पादस्फु
टिननाशनः घृताक्तैः स्फकभिल्लर्द्धेर्गे रजाक्षारसम
न्वितैः मुच्यतेचरणौक्षिप्रंपरितापात्सुदारुणात्
सैंधवचर्णोपहितंदलंकुमार्याद्विधाकृतंबद्धं गल
गंडगंडमालांग्रंथिंचैवार्बुदंशमयेत्ह्रीतकींचसंपि
ष्यगात्रमुद्वर्त्तयेन्नरः पश्चात्स्नानंप्रकुर्वीतदेहस्फुट
नशांतये वधूलस्यफलैःसम्यग्वारिणापरिपेषितः
गात्रमुद्वर्त्तयित्वानुह्रीतक्यास्फपिष्टया भूयश्चोद्व
र्तनंकृत्वायथास्नानंप्रकल्पयेत् प्रस्वेदात्मुच्यते-
क्षिप्रंततःस्वेदंसमाचरेत् मोचंतुघृतसंमिश्रंमुरव्य
वर्णकरंपरं भोजयेत्प्रातरुत्थायजीर्णेमधुरभोजनं

गोमूत्रेतुसमालोड्यमाहिषंसकृदुत्तमं तेनैवलेपनं कुर्यादेहेदौर्गंध्यनाशनं अभ्यंगंधातथालांबुचंदनंचेवपेषयेत् सर्षपाणांहितंकल्कंवर्णवर्द्धनमुत्तमं माहिषं क्वथितंक्षीरमेतेनोद्वर्त्तनंपरं रूक्षवर्णकरंस्त्रीणांति लकानांचनाशनं उदुंबरंगवांमूत्रेशनैर्मृद्वग्निनापचे त् तैलंमसूरसंयुक्तंतिलकानांविनाशनं प्रियंगव श्चंदनलोध्रमिश्राकालेपकंपांडुवटस्यपत्रं तोयेनपि ष्टानिविलासिनीनांकुर्वंतिवक्त्राणिशशिप्रभानि के वलायष्टसाधिष्ठाश्लक्ष्णशाल्मलिकंठकाः ष्टहमेते नवलिदंभवेत्सद्योपमंमुखं पिष्टाजंवीरबीजंचक्षौ द्रेणचगुडेनच अंगानामौषधंश्रेष्टंशशस्यरुधिरंत था रूक्षसैंधवसंमिश्रामदंमद्यसमुद्भवं क्षिप्रमेवह रेत्सुंसांपानतः संप्रयोजनात् तांबूलमदनाशायतत् क्षणंशीतवारिणा संपिबेत्पुरुषोस्त्रीणांचुलुकानि प्रयत्नतः तांबूलचूर्णदग्धास्तुकांजिकस्यतुधारयेत् सम्यकूलवणमिश्रस्यमधूकदाहशांतयेत् तांबूल चूर्णदग्धास्तुधारयेत्तुप्रयत्नतः गंडूषंतिलतैलस्यपु रुषःरूक्षवांछयाप्रातरुत्थायकोष्णेनवारिणापरिचूर्णि ते मंदाग्नेर्दीपनंमुख्यंसंपिबेद्धिभ्वभेषजं शुंठीचूर्ण समायुक्तयवक्षारंसमालिहन् सर्पिषाप्रातरुत्थायन रोवह्निंप्रदीपयेत् शुंठीमागधिकाचूर्णप्रातरुष्णांबुना

पिबेत् वातश्लेष्महरंश्रेष्ठमग्नेर्दीप्तिकरंपरं वात
लेविबंधेचसामदोषेग्निमार्दवे॥ गरांबुसदापथ्यंज
र्णजीर्णविनाशन पिप्पलीमधुसंयुक्तामेदःकफविन
शिनी श्वासकासज्वरहरापांडुप्लीहोदरापहा कास
जीर्णरुचिश्वासहृत्पांडुकृमिरोगिणां मंदाग्निविष
ग्नीनांशस्यतेगुडपिप्पली छर्द्यरोचकहृल्लासकंडूको
ठंम्लपित्तिनांकफपित्तवतांसेव्याविजयामधुनासह
कामलापांडुहृद्रोगदुर्नामोदरगुल्मिषु शोफानाहविबं
धघ्नीप्रयोज्यासागुडाभया मंदेनलेरुचिकरंवानबंधे
र्शसांहितं गुडनागरकंहंतिकासश्वासमरोचकं गु
डार्द्रकंवातहरंरुचिकृद्बलवर्द्धकं अग्निसंदीपनंहृद्यं
वर्च्चोभाधिकफापहं विकाशिविशदःश्रोंसिरोचनोदी
पनोमतः स्तंभासामानिलध्वंसकर्षणोलवणार्द्रकं
मंदाग्निलंघ्रतिश्यायपांडुतांविषमज्वरे नाम्नाभिलाषं
संवहन्त्यातुमधुनार्द्रकं मन्याहनुश्रवणलोचननासि
सिकास्यभ्रूभागतालुगलशंखशिरोविकारान् कृष्ण
निहंतिदशमूलकषायपीताक्काथेनवासक्षतत्रिफलोद्भ
न॥ मानमाह॥ गुंजाभिःसप्तभिर्माषःशाणोमाषचतु
यं शाणोद्वौटंकःकोलोसौद्वौकर्षउदंबरः अक्षंपाणि
तलंज्ञेयंस्कवर्णकवलग्रहः पिचुर्विडालपदकंशुक्तिः
पाणितलद्वयंतद्वयेनपलंमुष्टिप्रकुंचोबिल्वउच्यते द्वे

डेप्रसृतिं विंद्यात् द्वयं कुडवोंजलिः मानिकाष्टपलंते स्यमस्य चतुर्गुणं आढकं कंसपात्रे तु चतुर्भिर्द्रोण उच्यते तस्यार्यघटोमाननल्वणार्मणसूर्प्यकाः तुला लशतं ताभिर्विंशत्याभार उच्यते शुष्कद्रव्येषु इदं मानं द्विगुणंच द्रवार्द्रयो ज्ञातव्यं कुडवादूर्ध्वंप्रस्थादिष्वपि मानतः द्विगुण्यंनतुलामानांदितिमानविदोविदुः द्रोणिद्रो णाढकः प्रस्थकुडवाश्च पलं पिचु शाणकोमषकश्चैवय थापूर्वंचतुर्गुणं सम्यग्प्रयोगसर्वेषांसिद्धिमाख्यातिक र्मणां सिद्धिमाख्यातिसर्वेषांगुणैर्युक्तोभिषग्वरः इ तिश्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेव विरचितेग्रंथेवीरसिंहावलोकेज्योतिःशास्त्रकर्म्मवि पाकायुर्वेदोक्तप्रयोगोमिश्रकाध्यायः॥ समाप्तोयंग्रंथः

---

